

श्रीकाशी विश्वेश्वरलिङ्गगर्भाविर्भूत श्रीजगद्गुरु

विश्वाराध्य शिवाचार्याः

# प्रकाशकनिवेदनम्

वीरशैवेन्दुशेखरोऽयमधुना प्रकाश्यते । वर्षसप्तकात्प्रागेव सम्पूर्णग्रन्थोऽयम्मुद्रितोऽपि विघ्नबाहुल्याद्भूमिकादिना विसंयोजितएवासीत् दुर्बोधदानपत्राणां तच्चित्रानुवादादीनाम्प्रकाशनेऽपि कालातिक्रमः सञ्जातः । सन्नद्धेऽपि समस्तकार्यजाते महासंस्थानकार्यातिभारपरवशस्य मम ग्रन्थशीघ्रप्रकाशने स्वभावतः सौलभ्यं नासीत् । दानशासनपत्रचित्राणि तदनुवादादिकञ्च ग्रन्थान्ते सम्मुद्रितं द्रष्टव्यम् । अननुकूलतया महम्मदीयसार्वभौमदानशासनानुवादस्तु निरुद्धः, तथापि ग्रन्थेऽस्मिन् ग्रन्थकर्तॄणां कीदृशो गाढपरिश्रम इति विपश्चितामतिरोहितमेवास्ते । यद्ययं ग्रन्थः प्राज्ञैर्वीरशैवधार्मिकैतिहासिकविषये सम्यगुपयुज्यते चेत् प्राप्तोत्साहोऽहम्पुनरीदृक्कार्ये सानुरोधं प्रवेशयिष्यामीति—

काशी—
शा. १८९४ आषाढशुक्ल
गुरुपौर्णिमा

निवेदकः
**श्रीमहालिङ्गस्वामी**
**जंगमवाटिकामहासंस्थानम्**

'वीरशैवेन्दुशेखर' ग्रन्थमुद्दिश्य प्राप्ताः काश्चित

# विद्वत्सम्मतयः

प्रकाश्यन्ते

(१) काशीस्थराजकीयसंस्कृतमहाविद्यालयाध्यक्षा-(Principal of Govt. Sanskrit College)नां संस्कृताङ्गल-वङ्गादिविविधभाषाविज्ञानशास्त्रैकविचक्षणानां योगिकल्पानां पण्डितप्रवरश्रीगोपीनाथकविराज (M. A) काव्यतीर्थ-महोदयानां सम्मतिः—

" व्याकरणतीर्थोपाधिकेन पं० श्रीसदाशिव-शास्त्रिणा विनिर्मितं वीरशैवेन्दुशेखराख्यं वीरशैव-मतप्रतिपादकं ग्रन्थमवलोक्य प्रसन्नचित्ता वयं ग्रन्थकृते शतशो धन्यवादानर्पयामः। ग्रन्थेऽस्मिन् संक्षेपेण निबद्धा अपि षट्स्थलविचार-वीरशैवशब्द-व्युत्पत्ति-शिवमाहात्म्यलिङ्गधारणादयो बहवो वि-षयाः तत्तत्प्रमाणप्रदर्शनमुखेन समालोचिताः प्रकृत-

सिद्धान्तज्ञानलिप्सूनां मोदाय भविष्यन्तीति ग्रन्थस्यास्य प्रचारबाहुल्यमिष्यते ।"

Benares
D. 4-9-1932

कविराजोपाह्व
श्रीगोपीनाथशर्मणः

( २ ) काशीहिन्दुविश्वविद्यालयधर्मविज्ञानविभागे श्रीजोशीराम-मटरूमल्लगोयनकासंस्कृतमहाविद्यालयवेदविभागे च प्रधानाध्यापकानामग्निहोत्रिणां पण्डितप्रवरश्रीविद्याधरशास्त्रि-वेदाचार्यमहोदयानां सम्मतिः—

"स्वस्ति श्रीमान् पण्डितप्रवरः सदाशिवशास्त्री व्याकरणतीर्थो वीरशैवेन्दुशेखरनामकं रचयामास ग्रन्थमिमम् स एवावगमयति शास्त्रिवर्यस्य स्वसमयनिष्णाततां तदनुबन्धिपुराणेतिहासागमादिषु विशेषं परिश्रमं तन्मर्मज्ञताञ्च । मन्ये ग्रन्थोऽयं वीरशैवानां स्वमततत्त्वज्ञाने तदनुष्ठाने च महान्तमुपकारमादध्यात्. ते च ग्रन्थमिमं सम्यगवलोक्य तदर्थं यथावदनुष्ठाय च शास्त्रिणः परिश्रमं महान्तं सफलयेयुरिति"

काशी
ता० २९-८-१९३२

श्रीविद्याधरशर्मा

( ३ ) काशीस्थराजकीयसंस्कृतमहाविद्यालयव्याकरणशास्त्रप्रधानाध्यापकानां वैयाकरणशिखामणीनां ज्ञानवयोवृद्धानां पण्डितप्रवरश्रीदेवनारायणत्रिवेदव्याकरणाचार्यमहोदयानां सम्मतिः—

" अयं महामनःपण्डितसदाशिवशास्त्रिणा विरचितो वीरशैवेन्दुशेखरो ग्रन्थः परमोपयोगी सहृदयैर्ग्राह्य इत्येतदालोचनया प्रतीयते। अत्र च ग्रन्थकर्तुः शरदि पूर्णेन्दुकलेव प्रतिभा विद्योततेतराम् आशासेच मादृशैरन्यैरपि प्रकृतप्रबन्धः श्लाघनीय इति"

काशी
ता० ११-९-१९३२ } श्रीदेवनारायणत्रिवेदी

( ४ ) काशीस्थराजकीयसंस्कृतमहाविद्यालयन्यायशास्त्रप्रधानाध्यापकानां पण्डितप्रवरश्रीशिवदत्त शास्त्रिमिश्रन्यायाचार्यमहोदयानां सम्मतिः—

"श्रीमद्भिः पण्डितधुरीणैस्सदाशिवशास्त्रिभिर्निर्मितो ग्रन्थोऽतीव श्लाघ्यः परमादरणीयश्चेत्यत्राविवाद एव विद्याजुषाम्, ग्रन्थोऽयं वीरशैवानां स्वमतप्रकाशने तदनुष्ठाने चातीवोपकारको लुप्तप्रायं धर्मं पुनः प्रकाशयिष्यतीति सम्मनुते"

काशी
ता० २-९-१९३२ } श्रीशिवदत्तमिश्रः

(५) काशीस्थक्वीन्समाणीसंस्कृतमहाविद्यालये श्रीविशुद्धान
महाविद्यालये च न्यायशास्त्रप्रधानाध्यापकानां पण्डितप्र
श्रीवामाचरणभट्टाचार्यन्यायाचार्यमहोदयानां सम्मतिः—

" सदाशिवसन्तानप्रदाननिदानीभूतं श्र
न्तं भगवन्तं सदाशिवं सदा समाराधयता श्रीम
सदाशिवशास्त्रिणा विनिर्मिते सरलवाक्यक्रम
कलापपरिपूर्णे स्वकीयविद्यातरणिद्युतिविकासि
अतुलनगुणगणसंपादिते अनायासलब्धार्थसाध
निजकण्ठविराजितश्रीकण्ठानन्ततत्त्वप्रतिपादके
स्मिन् वीरशैवेन्दुशेखरनामके ग्रन्थे मोक्ष
प्रयतमानानामुपासनाविषयत्वं भस्मसात्कृतमन
थस्य विरचितविश्वविश्वनाथस्यैवेति निर्णयजनः
नेकप्रमाणसमवायं समवलोकयता मयापि निश्च
यते ब्रह्मप्रतिपादकानां सर्वेषामागमानां भगवच्छ
ङ्करपरत्वमेवेति । एवं निरवधितदीयैवंविधविवि
गुणाविमुग्धमानसोऽहं भगवतः सविधे प्रार्थया
यदसौ दीर्घायुर्भवन् विद्यया तपसा च स
सदाशिवप्रसादात्सदाशिवो विवर्धतामिति "

काशी
ता० ३०-८-३२ | श्रीवामाचरणभट्टाचार्य्य

( ६ ) काशीस्थटीकमाणीसंस्कृतमहाविद्यालयसाहित्य-प्रधानाध्यापकानां पण्डितप्रवरश्रीतारावरणभट्टाचार्यसाहित्याचार्यमहोदयानां सम्मतिः—

"श्रीमत्सदाशिवशास्त्रिव्याकरणतीर्थसङ्कलितं वीरशैवेन्दुशेखरनामानं ग्रन्थं विलोक्य परं प्रमोदमन्वभवम् । शास्त्रिवर्येणानेन महीयांसं श्रममङ्गीकृत्य श्रुतिस्मृतिपुराणतन्त्रादिशास्त्रेभ्यः सुबहूनि स्थलान्युधृत्य स्वमतदृढीकरणे परः प्रयत्नो व्यधायि तत्र साफल्यमप्यलम्भि । वयमेतस्य शास्त्रिवर्यस्य पाण्डित्यं ग्रन्थनिर्माणकौशलञ्च दृष्ट्वा नितरां सन्तुष्यामः प्रार्थयामहे च यदसौ दीर्घायुर्भूत्वा एवमेव ग्रथान्निर्माय देशस्य गौरवं वर्धयत्विति ।"

काशी
ता० ९-९-१९३२

श्रीताराचरणभट्टाचार्य्यः

( ७ ) काशीस्थश्रीविशुद्धानन्दमहाविद्यालयसाहित्य
नाध्यापकानां "शारदाभवन" "शारदासंस्कृतग्रन्थमाल
प्रतिष्ठापकानां पाठकोपाह्वपण्डितप्रवरश्रीगौरीनाथशास्त्रिस
व्याचार्यमहोदयानां सम्मतिः—

"वीरशैवमतस्यास्मिन् वीरशैवेन्दुशेखरे ।
विलोकिते वैदिकत्वमनादित्वञ्च सिध्यति॥
श्रुतिस्मृतिपुराणादिवचोभ्य इह लिङ्गिनाम्
इयत्तया नावधार्य्य उपकारः कियानिति ॥
शब्दशास्त्रैकविदुषा श्रीसदाशिवशास्त्रिणा
कृतः श्रमोऽत्र विदुषाममन्दानन्दमावहन् ।
विनयासं शैवतत्त्वजिज्ञासूनामभीष्टदः ।
मन्येऽहमेष भविता श्रीगौरीनाथपाठकः ।

( Benares D. 4-9-193

( ८ ) काशीस्थश्रीजगद्गुरुविश्वाराध्यसिंहासनजंगमवाटिकामहासंस्थानसाहित्यविदुषां ज्ञानवयोवृद्धानां पण्डितप्रवरश्रीभालाक्षशास्त्रिमहोदयानां सम्मतिः—

"श्रीमच्छक्तिविशिष्टाद्वैतगभीरसिद्धान्ताम्भोनिधिकुमुदबान्धवेन व्याकरणतीर्थविद्याभूषणपदवीकेनायुष्मता पण्डितसदाशिवशास्त्रिणा ग्रथितः शिवसिद्धान्तप्रकाशनपटुर्वीरशैवेन्दुशेखरः सादरम्मयावलोकितः । ग्रन्थेऽस्मिन् श्रीमज्जगद्गुरुपञ्चाचार्यभगवत्पादप्रस्थापितस्य वीरशैवमतस्य लिङ्गधारणशिवदीक्षाशक्तिविशिष्टाद्वैताप्राकृतत्वादिप्रधानविषया निगमागमैः सिद्धान्तिताः पुनरुपनिषत्पुराणेतिहासादिभिरुपबृंहिताः सुकुमारमतीनामपिसुगमाः समुल्लसन्ति। यैः कैश्चिदाधुनिकैर्वीरशैवमतप्राचीनत्ववैलक्ष्ण्यं यदनुमीयते तेषां कृतेऽप्यत्र जयनन्दाद्यनेकभूपालसमर्पितदानपत्रानुवादसन्निवेशेनातीव प्राचीनत्वं प्रदर्शितमास्ते । काशीस्थैः सुगृहीत नामधेयैरनेकैः पण्डितप्रकाण्डैः प्रमाणितो वीरशैवेन्दुशेखर इत्यस्य श्रीसदाशिवशास्त्रिणो लेखनकौशलमपि कारणम्मन्ये। सर्वोत्कृष्टेना-

नेन स्वमतग्रन्थविरचनोद्यमेन नितान्तप्रमुदिता
करणोऽहं वीरशैवेन्दुशेखरसन्दर्शनाय सुधीज
ननुरुन्ध्य ग्रन्थकर्तुरितोप्यधिकाभ्युदयपरम्परा
नाय श्रीजगद्गुरुविश्वाराध्यपदपङ्कजप्रणतो ले
व्यापारेणालङ्करोमि "

काशी | वीरमाहेश्वरः
ता० १३-१-३८ | श्रीभालाक्षशास्त्री



ॐ नमः शिवाय साम्बपरब्रह्मणे ।

# भूमिका

अयि सहृदयहृदया निरवद्यहृद्यविद्याविनोदरसिका निजकुलसुधांशवो विदितमेव भवतां श्रीमतां विपश्चितां ये खलु सृष्टेः प्रागपि ह्यनाद्यनन्तस्य समस्तदेवताचक्रचक्रवर्तिपदे स्थितस्य षट्त्रिंशत्तत्वकारणीभूतस्य विश्वेश्वरस्य मुखोद्भूता निगमागमा जगत्यस्मिन् ज्ञानज्योतिः प्रज्वलयामासुः प्रज्वलयिष्यन्ति स्वयं प्रज्वलन्ति चेति ।

प्रत्येकं युगसृष्टेरादौ भगवच्छिवाज्ञया निगमागमप्रमाणानुसारेण च पञ्चपीठाधिपतयः पूज्यपाद जगद्गुरुपञ्चाचार्याः शक्तिविशिष्टाद्वैतसिद्धान्तरूपं वीरशैवमतं स्थापयामासुः । स्थापयित्वा च स्वसिद्धान्तं धरामण्डले स्थिरं चक्रुः । तत्रतावच्छ्रीविश्वेश्वरलिंगगर्भाविर्भूतश्रीविश्वाराध्याशिवाचार्यपीठमखिलभुवनस्तम्भायमानश्रीविश्वनाथत्रिशूलाग्रवर्तिश्रीकाशीक्षेत्रे जाह्नवीतीरे नन्दनवने जङ्गमवाटिकामहामठे यो भसिताभसितोन्नतस्तम्भस्तोमराजिविराजितमण्डपः ( कैलासमण्डप इति नाम्ना शिष्टैराहूतः ) सार्थकाभिधानस्तत्रचतुस्त-

म्भान्तर्गनाविविधस्वर्णमणिगणखचितमेतद्धरिकेश नन्दनवनवासिकपिल–कश्यप–कणाद्–कात्यायनि कुम्भजनि-गजकर्ण–गोकर्ण–गौतम-वशिष्ठ–विश्वा मित्रहरिकेशादिपूज्यगणसंस्तुतं नल–हरिश्चन्द्रा दिषट्चक्रवर्तिवन्दितं नेपालक्षितिपालमौलिमुकु टालङ्कारहीराङ्कुरश्रीत्रैलोक्यमल्लभूपात्रिभुवनम ल्लभूपालपरिपालितं श्रीमहाराजाधिराज श्री श्री श्री महाराज जैनन्ददेव–महाराज–प्रभुनारायण सिंहप्रभृनिकाशीनरेशसेवितं श्री श्री श्री महाराज रीवाँभावसिंहदेवमहाराजमैहररघुवीरसिंहदेवनरे- शप्रभृनिराजमण्डलपूजितं श्रीमद्राजाधिराजपरमे श्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदेतिवदतां पति लोकैकवीरयदुकुलपयःपारावारकलानिधिशङ्खच- क्राङ्कुशकुठारमकरमत्स्यशरभसाल्वगण्डभेरुण्ड- धरणीवराहहनूमद्गरुडकण्ठीरवाद्यनेकबिरुदाङ्कित- महीशूरपुरवराधीशश्रीकृष्णराजवाडियर, प्रभृति- महीपालमहितं वैदेशीय (मोहमद) हुमाय्वाहाकबर- जाहंगीरशाह जाहानावरंगजेब-बहदूरप्रभृतिद्वादश- देहलीबादशाहसम्मानितं संरक्षितं च दिव्यतेजोऽ भिरामं सत्कीर्तिमत् सत्कीर्तिनामकं तद्देदीप्यते त्रिकालाबाधितम् । सम्प्रति पीठमेतदध्यस्ता

न्यायवेदान्तादिदर्शनकोविदाः शिष्यहृध्वान्तभास्कराः शिवागमार्थानुसन्धाननिरता वीरमाहेश्वरकुलचक्रवर्तिनः शतशो वरिशैवाद्विजच्छात्रेभ्योऽन्नवस्त्रादिकं वितरन्तः श्रीवीरशैवमतं विद्वन्मयं कृत्वोद्धरन्तः श्री १०८ जगद्गुरुशिवलिङ्गशिवाचार्याः विराजन्ते । एतद्वीरशैवमताचार्यप्रणीताः सन्ति भूयांसः प्रोद्दामग्रन्थाः । परमिदानीं कलकत्तानिवासिनो भारतधार्मिकैतिहासिकग्रन्थकर्तृशिवशङ्करशर्माणः कल्याणपत्तने जन्मलब्धबसवसचिवेन पञ्चषष्ट्यधिक नवशत ( ९६५ ) क्रिस्ताब्द एतन्मतं स्थापितमित्याद्यसम्बद्धविषयं स्वविरचितग्रन्थे तावदुल्लिखितवन्तः वीरशैवाचार्यसम्प्रदायज्ञानाभावात् । येतु श्रीक्षेत्रकाशीस्था वेदागमोपनिषत्प्रतिपादितपरमपवित्रसनातनवीरशैवमततत्वावगन्तारः सकलशास्त्रपारावारराकासुधाकराः सनातनधर्मप्रतिष्ठापनाचार्यसदृशाः परमास्तिकशिरोमणयः पण्डिताग्रेसराः महामहोपाध्याय पं० श्रीशिवकुमारमिश्रप्रभृतयो वीरशैवमतप्रतिपादकलिङ्गधारणचन्द्रिकादिग्रन्थानां सप्रमाणं व्याख्यां कृतवन्त इति महानुभावानां तेषां शिवाचार्यभक्तिरप्यापि सुप्रसिद्धास्ति । सम्यगेव । तथापि वीर-

शैवतत्त्वज्ञानशून्यानां शिवङ्करशर्मणां तत्सदृशानाञ्च वीरशैवसिद्धान्तयाथार्थ्यज्ञानं यथा स्यात्तथा भवान् संक्षेपतः सुलभतया प्रबन्धमेकं सप्रमाणंविरचयतु इति श्रीपूर्वोक्तमहाचार्याणामाज्ञावशंवदेन मयाऽकारि वीरशैवेन्दुशेखरनामकग्रन्थोऽयम्। तच्छ्रीमद्रम्भापुरीवीरसिंहासनाधीश्वराणां श्रीमदाज्ञया चन्नाशिवलिङ्गशिवाचार्य महास्वामिन एव संस्कृतानभिज्ञानामपि एतन्मतविषयकज्ञानं यत्किञ्चित् स्यात् तथा हिन्दीभाषायामपि प्रबन्धमेकं विरच्य श्रीसंस्थानद्रव्येण एवेमौ ग्रन्थौ मुद्रयित्वा प्रकाशयेत्यादिदेशुः। तन्महानुभावजगदाचार्याणामाज्ञानुसारेण श्रीजगद्गुरुविश्वाराध्यादिपञ्चभगवत्पादपद्मषट्पदायमानेन मया हिन्दीभाषायामपि वीरशैवसनातनविषयकग्रन्थो व्यरचि। समग्रमेतद्ग्रन्थशोधनभारं तत्रभवन्तोऽस्मद्गुरुचरणा व्याकरणन्यायवेदान्तादिशास्त्रपारगा विबुधललामास्तीर्थायनन्यसामान्यबिरुदाङ्किताः श्रीमङ्गलमूर्तयो वाराणसीयर्टीकमाणिसंस्कृत ( कॉलेज ) महापाठशालाव्याकरणशास्त्रप्रधानाध्यापकाः पं० गुलाबूशर्माण उत्साहितवन्त इति सूचयितुमत्यानन्दो भविष्यति। ग्रन्थेऽस्मिन् वीरशैवानां यावज्जीवम् लिङ्गधारणमावश्यकं वेदागमसम्मतमिति मतान्तरावलम्बि-

भिराशङ्कितशास्त्रविरोधादिदोषान्निरस्य शिवो-त्कर्षत्वञ्च दर्शितम्. मध्ये षट्स्थलविवेकः वीरशैवशब्दादिविचारोऽपि दर्शितः । ततो वीरशैवानां शरीरत्यागानन्तरं कर्तव्यताकविधिः सूतकादिसमये चाचरणीयविधिस्तत्रस्तत्र आगमानां प्रामाण्यं शक्तिविशिष्टाद्वैतविवेकादिकञ्च प्रतिपादितमास्ति ।

अत्र श्रीसंस्थानकार्यबाहुल्यव्यग्रतया अनवधानवशादापतितमशुद्धं युक्तियुक्तं विद्वद्भिर्निरूप्यानुग्राह्योऽयम् । निष्पक्षपातबुद्धिभिर्भवद्भिस्सूचितं सादरमंगीकृत्य सूचनानुसारेण द्वितीयसंस्करणं संशोधयिष्यामीति ॥

विद्वज्जनविधेयः—

पं० सदाशिव शास्त्री व्याकरणतीर्थादिपदवीकः ।

# शुद्धाशुद्धपत्रिका ।

## ( भूमिकानन्तरम् )

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ११ | भवल्लिखित | भवल्लिखितं |
| ,, | ,, | नाम ग्रन्थं | नामकग्रन्थं |
| ११ | १७ | म्न प्रति | नस्प्रति- |

## ( ग्रन्थस्यादितः )

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १६ | ब्रह्मसनातम् | ब्रह्मसनातनम् |
| ४ | ६ | तम्द्र | तद्ब्र |
| ५ | ८ | इहोच्यत | इहोच्यते |
| ७ | १ | ऋ्गित्याह | ऋगित्याह |
| २० | ७ | माहेश्वस्थलं | माहेश्वरस्थलं |
| २१ | १३ | पृष्टे | पृष्ठो |
| २४ | १४ | परिष्वको | परिष्वक्तो |
| २८ | १० | इतिच | इटिच |
| २६ | ३ | संस्पुटी | संपुटी |
| २६ | १० | गुरुर्लिगं | गुरुर्लिंगं |
| ३२ | १६ | शृगाः | शृंगाः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६ | १८ | गति | गतिः |
| ४४ | १३ | नसन्नश्चास | नसन्नचास |
| ४६ | १७ | त्रिष्ण्वादिभिः | विष्ण्वादिभिः |
| ५० | ८ | मूच्यने | सूच्यते |
| ५२ | १८ | मूनसंहितायां | सूतसंहितायां |
| ५४ | १५ | पूजनेन्सदा | पूजयेत्सदा |
| ५५ | ४ | यस्तस्य | यत्तस्य |
| ५५ | १८ | किंमर्थं | किमर्थं |
| ५७ | १४ | धारयेर्लिग | धारयेल्लिंगं |
| ५८ | २ | लिंगस्यार्चनन्तु | लिंगस्यचार्चनन्तु |
| ५८ | १५ | सर्वलिंगाय नमः | शर्वलिंगाय नमः |
| ६० | २ | एतस्थितेरपि | एतत्स्थितेरपि |
| ६१ | ६ | प्रमादर्लिगं | प्रसादर्लिंगं |
| ६५ | ११ | शाघनादिना | शोधनादिना |
| ७२ | १५ | भूमौ | भूमौ |
| ७५ | १८ | लिंगमाकल्य | लिंगमाकल्प्य |
| ८० | २ | वकु | वक्तुं |
| ८१ | ६ | उद्भवम् | ऊद्भवम् |
| ८१ | १६ | सम्यगुःपादितम् | सम्यगुपपादितम् |
| ८१ | १८ | बादरायेणेन | बादरायणेन |
| ९० | ५ | केपुचिर्लिग | केषुचिल्लिंग |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९० | ५ | भस्मधोरण | भस्मधारण |
| ९१ | ११ | लक्षणेमिति | लक्षणमिति |
| ९६ | ११ | रामे रामे | रोम रोम |
| ९८ | ३ | प्रदशित | प्रदर्शित |
| ९८ | ७ | व्याक्यनां | व्याक्यानां |
| ९८ | ७ | तदरिरिक्त | तदतिरिक्त |
| १०० | १ | अष्टविशति | अष्टविंशति |
| १०२ | ११ | वसवनैतन् | वसवंनैतन् |
| १०२ | १२ | आङ्कलय | आङ्कलेयः |
| १०४ | ५ | पूर्वनामाभिः | पूर्वनामभिः |
| १०४ | १३ | देशाधिपति | देशाधिपतिभि |
| १०५ | ७ | क्तत्रयादश | क्तत्रयोदश |
| १०५ | ८ | वर्षीयशासनीति | वर्षीयशासनानीति |
| १०६ | १६ | निमिषन्नपि | न्निमिषन्नपि |
| १०८ | ५ | इन्यादि | इत्यादि |
| ११० | ५ | अन्यशररि | अन्यशरीर |
| १११ | ९ | शिवसम्बन्धन | शिवसम्बन्धेन |
| ११७ | १४ | न सव्य | न सेव्य |
| ११९ | २ | शवर | शावर |
| ११९ | ७ | शिवात्क | शिवोक्त |
| १२० | ११ | पंचमाङ्क | पंचमाङ्के |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १२२ | ७ | वेद्ममं | वेद्मयं |
| १२३ | १५ | वेंदाविरुद्ध | वेदाविरुद्ध |
| १२५ | १ | मोहेश्वरो | माहेश्वरो |
| १२५ | १२ | शिवशास्त्राविं | शिवशास्त्रवि |
| १२६ | ६ | सकलवदिक | सकलवैदिक |
| १२७ | ६ | पणिडतराध्यो | पण्डिताराध्यो |
| १२७ | ११ | सिंहासनाध्यक्ष | सिंहासनाध्यक्षः |
| १२८ | १६ | प्रणवरुप | प्रणवरूप |
| १३० | २० | शि जीवैक्यं | शिवजीवैक्यं |
| १३१ | ५ | भागत्यागलक्षणेन | भागत्यागलक्षणया |
| १३१ | ५ | द्वदत्त | देवदत्त |
| १३४ | ७ | प्येवमव | प्येवमेव |
| १३६ | ८ | स्तात्वम | स्तत्त्वम |
| १३६ | १० | तत्वमसि | तत्त्वमसि |
| १४५ | १० | तस्थुः | तस्थे |
| १४६ | १२ | शिव । वुद्दिश्य | शिवावुद्दिश्य |
| १४८ | ६ | त्रिभुवनीवषयाः | त्रिभुवनविषयाः |
| १५३ | ३ | सर्वापेक्षितीसध्यर्थं, | सर्वापेक्षितसि |
| १६४ | १४ | प्रपंच | प्रपंचं |



भारतेतिहासग्रन्थोल्लिखितवीरशैवसम्प्रदाय-विषयकं लेखं दृष्ट्वा तद्ग्रन्थकर्तुःसविधे साधारं यथार्थवीरशैवमतसनातनविषयकप्रबन्धो विस्तरेण विलिख्यराजानियमानुरोधेन ( रजिष्टरद्वारेण ) प्रेषितः । तेनसाकमधोलिखिताशययुना सत्प्रेषिता

पत्रिका—

श्रीक्षेत्रकाशीतः ताः ११-१-१९२४

कलिकत्तानिवासि पं.शिवशङ्करमिश्रमहोदयेषु,

पत्रिकाङ्कः

२९६ / १९२५

सविनयनिवेदनम्

भवल्लिखित 'भारतीतिहासिकं' नामग्रन्थं समग्रं विचारपूर्वकमवलोक्याऽत्यन्तमानन्दमाले-भे। भवद्भिर्यद्वीरशैवसम्प्रदायविषयकलेखनं लिखितं तदत्यन्तमस्मन्मतविरुद्धमस्त्यतस्तन्मतसनातनविष-यकलेखमेकं भवन्निकटे प्रेषितवानस्मि । निष्पक्षपा-तधियाऽवश्यंद्रष्टव्यम् । यथाकथंचित्कथमपि काश्यां

वीरशैवसाम्प्रदायिकमठोऽस्तीति यदाविदितं तदै-तन्मतनत्त्वमवगन्तुं विचारयितव्यमासीत्पत्रद्वारेण। तथा न कृतं भवद्भिः। सम्प्रतिप्रकाशितविषयो वी-रशैवमतस्यातीवापमानकारकः। अतस्तद्विषयमुत्पा द्य वीरशैवमतधर्मं प्रकाशयन्तु भवन्तः। एतस्मि न्विषये शीघ्रमुत्तरं प्रेषणीयं विंशतिदिनाभ्यन्तरे। विंशतिदिनपर्यन्तं भवत्पत्रिकां निरीक्षे। यद्युत्तरं नायातं चेत्तदाग्रिमकार्यमारभे ॥ इति ॥

जङ्गमवाडीमठ — भवद्विधेयः
विद्याभूषणोव्याकरणतीर्थश्च
पं. सदाशिवशास्त्री

बहुदिनपर्यन्तं मिश्रमहाशयानां पत्रमार्गं निरीक्षितवन्तः । विंशतिदिने गतेऽप्युत्तरं नायातमतः पुनश्च रजिष्टरद्वारेणास्मत्प्रेषितपत्रिकाऽधोलिखिताऽगत्याकलिता ॥

श्रीजगद्गुरुपंचाचार्याः प्रसीदन्तु

पत्रांकः श्रीक्षेत्रकाशीतः

२७१ ता० ८-६-२-२४

१९२४

भवन्निकटे ता. ११-१-१९२४ आंग्लेयतिथौ वीरशैवमतसनातनत्वविषयकएकः प्रबन्धो रजिष्टर्द्वारेण प्रेषितआसीत् । परं भवदुत्तरमेतावत्पर्यन्तं नायातम् । भवन्तेतत्पत्रिकायाअप्युत्तरं दशदिनाभ्यन्तरं दीयताम् यदि न दीयतेचेद्भवल्लिखितमप्रमाणमितिस्यन्यमुद्रणं कारयितव्यं भवेत । भवन्तो विद्वांसो भवद्विरचितग्रन्थएव यथार्थधर्मप्रकाशने का हानिः श्रीमताम् । सम्प्रति प्रकाशितविषयो वीरशैवमतस्यातीवविरुद्धोऽस्ति । अतः श्रीमद्भिः शीघ्रमुत्तरं यदितर्दीयतेचेत्तर्हि हठाद्राजशासनानुसारेणाग्रिमकार्यमारभामहे ।

भवदीयः

जङ्गमवाटिका { सदाशिवशर्मा, व्याकरणतीर्थः

पं० शिवशङ्करमिश्रैर्हिन्दीभाषयादत्तोत्तरपत्रिकायाः संस्कृतानुवादः ।

१२।१ चोरबागानवीथिः ( लेन ) कलकत्ता ।

ताः १८-२-२४

श्रीमन् भवत्प्रेषिता कृपापत्रिका लब्धा ।

वीरशैवसाम्प्रदायिकवृत्तान्तोऽपि प्राप्तः । भवन्तः कृपापूर्वकं सूचनां दत्तवन्तः । अतः श्रीमतां भवतां धन्यवादः । भारतैतिहासिकग्रन्थस्य शीघ्रमेव द्वितीयसंस्करणं भविष्यति । तदाहमवश्यं भवत्सूचनानुसारेण सुधारणां करिष्ये । यस्मिन्कस्मिन्नपि धर्मसम्प्रदायविषये भ्रमं कारयित्वा तत्तन्मतानुयायिनां दुःखं दातव्यमिति नास्माकमुद्देशः। अस्ति भवत्प्रेषितवृत्तान्तमप्यस्मन्निकटे सुरक्षितम् । तत्समये ( पुनर्मुद्रणसमये ) आवश्यकतानुसारेण पुनश्च भवद्भिःसहायतां प्राप्स्ये । आशास्तिकिल मत्प्रेषितैतत्पत्रिकया भवतां सन्तोषो भविष्यतीति । क्षमां कुर्वन्तु कष्टंभवन्तः । कार्यवशादुत्तरदाने विलम्बो जातः । एतद्विषयेऽपि क्षमां याचे ॥

भवदीयः

शिवशंकर मिश्रः ।

अपिच श्रीवाराणसीया न्यायव्याकरणादिशास्त्रपारगाः पं. श्रीगिरीशशुक्लन्यायाचार्याः श्रीवीरशैवमतविषयकज्ञानं सम्यक्सर्वेषां कथं स्यात् । तूष्णीं तन्मतनिजतत्त्वं नायाति बहिरित्यालोच्य ऐतिहासिकेन वङ्गीयानयकुमारलिखितलेखनांशं गृहित्वा मासिकसुप्रभाते बसवेन (११६०) ख्रिस्ताब्द्गतन्मतं स्थापितं । दक्षिणे लिङ्गधारिणो जङ्गमा भूयांसः सन्ति । उत्तरे श्रीकेदारेश्वरसन्निधौ सन्तीत्यादिविषयं लिखितवन्तः ॥

तद्दृष्ट्वाऽस्माभिरवश्यं तस्योत्तरं दातव्यमासीदतोवैदिकसनातनवीरशैवमतमनादिकालाद्वर्वर्ति। बसवेनैतन्मतं न स्थापितं एतन्मताचार्याःपंचवर्तन्ते। लिङ्गधारणविषयो विधिश्च वेदागमप्रतिपादितः । वीरशैवस्त्रीभिः पुम्भिश्च सर्वदाऽचरणीयविध्यादिविषयान् शास्त्रेतिहासाधारपूर्वकं शङ्कां निरस्यविस्तारेणालिखित्वा पण्डितमहाशयानां निकटे प्रेषितं रजिष्टरद्वारेण।इतोप्यधिकजिज्ञासुभिरस्मद्विरचितवीरशैवसनातननामकपुस्तके वीरशैवेन्दुशेखरेच द्रष्टव्यमिति। तत्साकमधोलिखिताशयाकलितं मत्प्रेषितं पत्रम् ।

पत्राङ्कः

४२८
१६२४

श्रीक्षेत्रकाशीतः

ताः २४-१०-१९२४

पं. श्रीगिरीशशुक्लन्यायाचार्यमहोदयेषु

सविनयनिवेदनम् ।

भोमहाशयाः सुप्रभाते भवल्लिखितमैतिहासिकजंगमसम्प्रदायविषयको लेखःसमग्रं विचारपूर्वकं दृष्टः । सोऽत्यन्तमस्मत्सम्प्रदायस्याविरुद्धोऽस्ति । अतस्तत्सम्प्रदायसनातनविषयकमेकं लेखं लिखित्वा भवन्निकटे प्रेषितोऽस्ति। विचारपूर्वकं समग्रंदृष्ट्वा सुप्रभातेऽवश्यंप्रकाशयितव्यं सर्वेषामवगाहनार्थम् । अथच संस्थानम्प्रत्यागत्य प्राचीनकालीनभूभृद्दत्त शासनानिच द्रष्टव्यानि भवद्भिः। सत्यवादिनां किं लिखितव्यमस्ति बहु ।

श्रीसंस्थान-
जंगमवाटिका

भवदीयः
सदाशिवशर्माव्याकरणतीर्थः

पण्डितमहाशयसकाशादागतंपत्रम् ।

काशी

कार्त्तिक कृ०

१२

८१

## प्रियमहाशय

अद्यसमासादितं श्रीमतां पत्रं लेखश्च । परन्तु नत्रेदं वक्तव्यं यदयंश्रीमतां लेखोऽतीवदीर्घकायः । यावदस्मिन्लेखे लाघवं नकरिष्यन्ति भवन्तस्तावद यंकथं स्वल्पकाये 'सुप्रभाते' प्रकाशितो भवेत् । तस्मादयं लेखः स्वल्पःकर्तव्यः येन प्रकाशितः स्यात् सुप्रभाते । अथच कार्त्तिकमासस्य सुप्रभातं यन्त्रालयारूढं वर्त्तते । नास्तितत्रावकाशो द्वित्रैर्दिनैःप्रकाशितं तत्कार्यालये समागमिष्यति । तस्मान्मार्गशीर्षमासस्य सुप्रभाते भवतां लेखःप्रकाशितो भविष्यति । अवश्यमागमिष्यामि दिनचतुष्टये संस्थान्नप्रतीति ।

भवदीयो

गिरीशशुक्लः

पण्डितमहाशयाः पत्रानुसारेण संस्थान जंगम वाटिकामहामठंप्रत्यागताः । परस्परकुशलप्रश्नानन्तरं पण्डितमहाशयैरेवमुक्तम् । वयंयथार्थतत्वाभिमानिनः तूष्णीं स्यामश्चेद्भवन्तो नलिखन्त्वीत्येवमाचरितम् । प्राचीनशासनादीन् दृष्ट्वाऽत्यानन्दंप्राप्याऽवश्यं भवद्भिरवःप्रकाश्यते । भवदनुमतिश्चेत्संक्षिप्येत्यनुमतिं लब्ध्वा गताः । गत्वातथाकृतवन्तः। निष्पक्षपाताधियां विचारवतां विपश्चितां स्वभावगपद्धानि सूचयितुमानन्दो भविष्यति ॥



श्री गणेशाय नमः ।

# वीरशैवेन्दुशेखरः ।

पंचास्यवदनोद्भूतान् पंचसिंहासनाधिपान् ।
पंचब्रह्मस्वरूपांश्च पंचाचार्यजगद्गुरून् ॥ १ ॥
तान्नत्वा सततं भक्त्या प्रणमत्स्वर्महीरुहान् ।
यैः पुरा शक्तिवैशिष्ट्यसिद्धान्तस्स्थापितो भुवि ॥ २ ॥
ज्ञानमोक्षप्रदातारं ज्ञानसिंहासनाधिपम् ।
वीरशैवमनाचार्यं विश्ववन्द्यं गुरुं सदा ॥ ३ ॥
विश्वाराध्यमहापीठे विराजन्तमहर्निशम् ।
नत्वा च शिवालिङ्गाख्यं शिवाचार्यं जगद्गुरुम् ॥४॥
येषां स्मरणमात्रेण विकासो जायते मतिः ।
चतुर्मुखस्वरूपांश्च विद्यादातॄन् गुरून् मुदा ॥ ५ ॥
शास्त्र्युपाधिं रंवणार्यं भालाच्चं कृष्णशास्त्रिणम् ।
गुलाबशर्माणं च ध्यात्वा झोपाधिसहितं परम् ॥६॥
यस्य सिद्धेश्वराचार्यः पिता शैवागमार्थवित् ।
यस्य साध्वी मणिर्माता सिद्धवीराम्बिका शिवा ॥७॥
यद्भ्राता राघवाङ्कश्च रुद्रमुनिरुमापतिः ।
गीतसाहित्यनिष्णाता दारुकाचार्यवंशजाः ॥ ८ ॥
सोऽहं सदाशिवाचार्यः पंचाचार्यपथानुगः ।

वैयाकरणतीर्थादि पदवीभिर्विभूषितः ॥ ९ ॥
कुर्वे वेदागमादिभ्यः किंचिदुद्धृत्य यत्नतः ।
तत्रानिर्णीतमेवार्थं वीरशैवेन्दुशेखरम् ॥ १० ॥
भक्त्यार्पयामि चरणे शिवलिङ्गजगद्गुरोः ।
यस्याऽऽश्रयबलादेव विद्यावित्तं ममास्ति च ॥ ११ ॥

ऋग्वेदे—पवित्रं ते विततं ब्रह्मणस्पते । प्रभुर्गात्राणि पर्येषि विश्वतः अतप्ततनूर्नतदामोऽश्नुते शृतास इद्वहंस्तत्समाशत ॥ इति

बृहिवृद्धावित्यस्माद्धातोरौणादिकमनिनप्रत्ययान्निष्पन्नोऽयं ब्रह्मशब्दः ।

अस्यलक्षणन्तु—अपास्तसमस्तदुःखकलङ्क निरतिशयज्ञानानन्दादिशक्त्यतिशयत्वं ब्रह्मत्वमिति यावत् । अस्तु. ब्रह्मशब्देनात्र किं ग्राह्यम् ।

बृहदारण्यकछान्दोग्यादौ—"अयमात्मा ब्रह्म" "अन्नं ब्रह्म" "विज्ञानं ब्रह्म" "आदित्यो ब्रह्म" "नारायणपरं ब्रह्म" त्यादयस्तत्रतत्रान्यंमन्यमर्थमुपपादयन्त्यतोऽत्र किं ग्राह्यमिति सन्देहः सम्पद्यत इति चेत्सत्यम् ।

श्रवणमननादिनिश्चितभक्तिज्ञानोत्सुखसर्वान्तर्याम्यर्थवाच्य ब्रह्मशब्देनात्र लिङ्गं गृह्यते कुतः

सिद्धान्तागमे–"तल्लिङ्गं ब्रह्म शाश्वतम्" इति

उत्तरवातुले–"लिङ्गं ब्रह्मेति निश्चितम्" इति

ब्रह्मगीतायामपि–"लिङ्गं ब्रह्म विनिश्चितम्" इति

स्कन्दपुराणे–"ब्रह्म तल्लिङ्गमुच्यते" इति

लिङ्गपुराणे–"ब्रह्मेति लिङ्गमाख्यातं" इति

सिद्धान्तशिखामणौ–"तल्लिङ्गं ब्रह्मकेवलं"।
तल्लिङ्गं ब्रह्म शाश्वतं "लिङ्गं ब्रह्मसनातनम्" इति

क्रियासारे–"लिङ्गं ब्रह्मेति कीर्तितम्" इति
अपिच तत्रैव–

तद् ब्रह्म केवलं लिङ्गं ज्ञातव्यं च मुमुक्षुभिः।
ब्रह्मणो लिङ्गरूपित्वं न युक्तमिति चेच्छृणु ॥

आत्मायतनम आरभ्य लिङ्गशब्दपरम्परा । प्रसिद्धतैत्तिरीयोपनिषद्येव प्रदर्श्यते ॥ लिङ्गशब्दस्य नान्योऽर्थः कल्प्यः स्वरसतः श्रुतेः । इतिप्रदर्श्य सम्यग्लिङ्गपरत्वं राद्धान्तितम् । "लिङ्गं तद् ब्रह्म संज्ञितम्"। "लिङ्गं ब्रह्मसनातनम्। चिदानन्दरूपः शिवोऽहं शिवोऽहं करटवर्मणे ब्रह्मणे नमः"। इत्यादिषु नीलकण्ठशिवाचार्य शङ्कराचार्य प्रभृतिभिश्च ब्रह्म-

शब्दस्य शिवलिङ्गपरत्वेनोक्तत्वात्। अथ च श्रीपति पण्डित नीलकण्ठ शिवाचार्यैः "अथातोब्रह्मजिज्ञासा" इति ब्रह्मसूत्रस्थितब्रह्मशब्दस्यलिङ्गपरत्वव्यवस्थापनात् । एवं श्रीमन्निजगुणाशिवयोगिनोऽपि स्वविरचितविवेक चिन्तामणौ ब्रह्मशब्दस्य लिङ्गपरत्व प्रतिपादनात् । अनेकत्रलिङ्गाख्ये ब्रह्मणि लिङ्गं तब्द्रह्मसंज्ञितमितिप्रयोगदर्शनाच्चात्र लिङ्गपर्यायो ॥ ब्रह्मशब्दः अपिच

तैत्तिरीय भृगुवल्ल्याम्–यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्वतद्ब्रह्मे तिश्रुतिः एतच्छ्रुत्यनुसारेण प्रलयसमये यस्मिन् जगदेतत्सकलचराचरात्मकप्रपंचं लयं गच्छति अन्तर्भवति ( लीनं गच्छतीतियावत् ) पुनश्चयस्मादुद्भवति तस्य ब्रह्मेति ब्रह्मतत्त्वविदो वदन्ति किल । एतादृशार्थो लिङ्गपदेनापिगम्यते । आगमपुराणादिष्वपि स्पस्टं प्रतिपादितम् । तथाच सिद्धान्तशिखामणौ लयं गच्छति यत्रैव जगदेतच्चराचरम् । पुनः पुनः समुत्पत्तिं तल्लिंगं ब्रह्मशाश्वतम् । वातुले ॥ लीयते गम्यते यत्र येन सर्वं चराचरम् । तदेतल्लिङ्गमित्युक्तं

लिङ्गतत्त्वपरायणैः । तस्माल्लिङ्गमितिख्यातं सदानन्दचिदात्मकम् । बृहत्वाद्बृंहणत्वाच्च ब्रह्मशब्दाभिधेयकम् ॥ इति ॥

शिवधर्मोत्तरे- लिङ्गेन जायते तत्र जगत्स्थावरजङ्गमम् । तस्माल्लिङ्गं विशेषेण लिङ्गरूपमुदाहृतम् ॥ एवं

गारुडे- लकारो लय इत्युक्तो गकारः सृष्टिरुच्यते । लयनं गमनं चैव लिङ्गशब्द इहोच्यते ॥ इति

सर्वं लिङ्गमयं जगदित्याद्यनेकप्रमाणानि सन्ति । लीनमर्थं गमयन्तीति व्युत्पत्त्या तदधिकरणत्वात्तद्व्यपदेशाच्च ब्रह्मशब्दोऽत्र लिङ्गपर्याय इति निर्धार्यते । एवमेव सांख्यतत्त्वकौमुद्यामपि लिङ्गपदव्युत्पत्तिः प्रदर्शिता । तथाच ऋगर्थः तस्य ब्रह्मणः पतिरधिष्ठाता तच्छरीरकःसन् तत्रास्थित इत्यर्थः।तथाच हे ब्रह्मणस्पते लिङ्गरूपशरीरावच्छेदेन शरीरभावेनाधिष्ठित परमशिव ते तव तदित्यव्याहृत्य तद्ब्रह्मपदवाच्यलिङ्गरूपं शरीरं पवित्रं वक्ष्यमाणरीत्या शुच्यशुचिकालेऽपि धर्तुं योग्यम् । विततमिष्टप्राणभावलिङ्गभेदेन विस्तृतम् । (अनेकविधमितियावत्) । प्रभुर्निग्रहानुग्रहसमर्थस्त्वं

विश्वतः सर्वाणि अत्र सार्वविभक्तिकस्तसिलित्यनेन द्वितीयाबहुवचने तसिल् । गात्राणि शरीराणि पर्येषि व्याप्नोषि धार्यमाणः सन् लिङ्गरूपशरीरद्वारा भक्ताङ्गेषु सम्बन्धो भवसि संयुक्तोऽसीत्यर्थः ॥

अत्र ब्रह्मशब्देन पृथ्व्यां प्रतिष्ठितविश्वेश्वरादिलिङ्गानि ग्राह्याणीतिनु न शङ्क्यम् । तेषां शरीरधारणासम्भवादुक्तार्थस्य अर्थाद्गात्राणि पर्येषि विश्वत इत्यस्याऽनन्वयापत्तेश्च । अतस्ततनुर्वेधादिदीक्षात्रयेण दूरीकृतमलत्रयातनुर्यस्य स न भवतीत्यततनुः । ( अग्रे दीक्षाभेदस्वरूपफलानि च स्फुटीकरिष्यामः ) । दीक्षासंस्काराऽप्राप्तवान् । आमोऽपरिपक्वान्तःकरणः सन् । तद्भगवच्छिवस्वरूपं नाश्नुते । नप्राप्नोति। आदौ दीक्षां विना शिवपूजां कर्तुमेवाधिकारी न भवति । किमुत तत्स्वरूपप्राप्तौ ॥ अथवा पवित्रंतेविततमित्यत्र । विततशब्द 'तनुविस्तारे' इतिधातुनिष्पन्नत्वेन शरीरार्थकस्तनुशब्दवत् । ब्रह्मपदं लिङ्गार्थकमित्युक्तमेव।तथाच हे ब्रह्मणस्पते लिङ्गाधिष्ठानकपशुपते ते तव विततं विस्तृतं लिङ्गरूपशरीरं पवित्रं शुच्यशुचिकालेऽपि धारणयोग्यम् । प्रभुः प्रकृष्टफलदायकः । तादृशलिङ्गशरीरकः सन् मुक्तिप्रदातेत्यर्थः । भक्तशरीराणि पर्येषि व्याप्नोषीत्यपि

बोध्यम् ॥ एतदृत्तमनुसृत्य कामिकागमे—ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते । तस्मात्पवित्रं तल्लिङ्गं धार्यं शैवमनामयम् ॥ इति ॥ एतच्छ्रुतिवाक्यमवलम्ब्यैव भगवदुपव्यासादिमहर्षयः स्कान्दलिङ्गपुराणादिष्वर्पात्थमूचुः ॥

स्कन्दपुराणे— ब्रह्मणस्पतिरीशो वै ब्रह्मतल्लिङ्गमुच्यते । पवित्रं तद्धि विख्यातं तत्प्रभुर्विश्वतः स्वयम् ॥ तत्सम्पर्कात्पवित्रत्वं गात्राणि कुरुते स्वयम् । अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः ॥ दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम् । शिवधर्माश्रिताः शान्ताः शिवार्चन परायणाः ॥ ये वहन्तः सदा लिङ्गं ते यान्ति परमं पदम् । अन्यथा नहि मां प्राप्तुं शक्यं देवि तथा श्रुतिः ॥ इति ॥

लिङ्गपुराणे—कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् । मानवः शिवयोगेन शिवो भवति निश्चयम् ॥ अनेन वर्त्मना गच्छन् सजीवन्नेव शङ्करः । ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः ॥ धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः ।

वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च ॥ ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम् । ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणः पतिरीश्वरः ॥ पवित्रं तद्धि विख्यातं तत्सम्पर्कात्तनुः शुचिः । ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ॥ तस्मात्पवित्रं तल्लिङ्गं धार्यं शैवमनामयम् ॥ अतप्ततनुरज्ञो वै इत्यर्थो संसारलक्षणः ॥ दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम् । यः करोति तपः पूर्वं सतप्ततनुरुच्यते ॥ परिपक्को विमोक्षाय सोऽश्नुते लिङ्गधारणम् ॥ इति ॥

काशीखण्डेऽपि— शस्तं त्रिपाप्मपरमं गगनं देहसंस्थितम् । जन्ममृत्युजरातीतं तत्पवित्रं प्रचक्षते ॥ पतनात्त्रायते यस्मादतीव नरकार्णवात् । यत्पवित्रं पवित्राणां तल्लिङ्गं ज्योतिरैश्वरम् ॥ तत्संपर्कात्पवित्रत्वं यद्गात्राणि पर्येषि वै । तदेव परमं ज्योतिर्लिङ्गं देवि मदात्मकम् ॥ शिवानन्दं परं धाम दुष्प्राप्यमकृतात्मभिः । ये संश्रिताः

सदा लिङ्गं ये वहन्तः सदादरात् ॥ ते प्राप्नुवन्ति सर्वेशं मामेवात्र न संशयः ॥ इति ॥

एतदर्थं ब्रह्माण्डपुराणे—तपस्तप्ता तनु र्यस्य सतप्ततनुरुच्यते । परिपक्को विमोक्षाय सोऽश्नुते लिङ्गधारणम् ॥ न करोति तपः पूर्वं सोऽतप्ततनु रुच्यते । अतप्तोऽयं विमोक्षाय नाश्नुते लिङ्ग धारणम् ॥ इति ॥

अत्र वैष्णवैस्तप्ता चक्रतापिता तनुरित्यादि कल्प्यते तन्नोचितम् । कुतः

तपोमूलमिदं सर्वं तपोमध्यंतपोऽन्तकम् ।
ऋषयः संयतात्मानः फलमूलानिलाशिनः ॥
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ।

इति मनुस्मृत्या प्राक्प्रदर्शितवचनैश्च तपधातुना तपसएव ग्रहणमौचितम् । तथाकल्पने

चक्रांकिततनुं दृष्ट्वा पश्येत्सूर्यं जपेन्नरः । जपेच्च पौरुषं सूक्तमन्यथारौरवंव्रजेत् इत्यादि धर्मशास्त्र वचनविरोधात्तथा कल्पितुं न शक्यते ॥ एवम् ॥

अयं मे हस्तो भगवान् अयं मे विश्वभेषजोऽयं

शिवाभिमर्शनः अयं माता अयं पिता अयं जीवातु रागमात् इदं तव प्रसर्पणं मुवन्धो एहि निरहीति ।

मन्त्रान्तरेणापि लिङ्गधारणं सिध्यति ॥

( अस्मिन्नर्थेग्रन्थान्तरे )

अयं मे हस्तो भगवनायं मे भगवत्तरः ।
शिवाभिमर्शनान्नित्यं शिवलिङ्गस्य धारणादिति ॥

ब्रह्मोपनिषदि–

यदक्षरं परं ब्रह्मतत्सूत्रमिति धारयेत् ।
सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ॥
धारणादस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।

अत्रसूत्रपदं लिङ्गबोधकम् तथा च योगजागमे–

संस्यूतत्वात्समस्तेषु वस्तुष्वपि च सन्ततम् ।
सूचनात्परमेशस्य सूत्रं लिङ्गमितीरितम् ॥इति॥

बृहत्कालोत्तरे–व्रतानि दुश्चराणीह तपांस्युग्राणि यानि च । न्यूनानि तानि सर्वाणि शिवलिङ्गस्य धारणादिति ॥ अपिचस्कन्दपुराणान्तर्गत शङ्करसंहितायाम् ॥ यो हस्तपीठे निजामिष्टलिङ्गं विन्यस्य तल्लीनमनः प्रचारः । बाह्यक्रियासंकुल-

निःस्पृहात्मासम्पूजयत्यङ्गी सर्वाङ्शैवः ॥ तदेव हस्ताम्बुजपीठमध्ये निधाय लिङ्गं परमात्मचिह्नम् । प्रपूजयेदैक्यधियोपचारैर्नरस्तु बाह्यान्तरभेदभिन्नैः । बाह्यपीठार्चनादेतत्करपीठार्चनं वरम् । सर्वेषां वीरशैवानां मुमुक्षूणां निरन्तरम् ॥ शिवभक्तान् सदाचारनिरतान् धृतलिङ्गकान् । विप्रानाराधय सदा भस्मरुद्राक्षधारिणः ॥ इष्टलिङ्गमिदं साक्षादनिष्टपरिहारकम् । धारयेदवधानेन शरीरे सर्वदा बुधः ॥ लिङ्गधारणकं नाम व्रतं माहेश्वराभिधम् । यावज्जीवमिदं दत्तमिष्टलिङ्गं समर्चयेत् ॥ इति ॥

एतद्ग्रन्थएव–पिङ्गलनामकब्राह्मणबालस्य सानंदमहर्षिणामुपदेशो वक्ष्यमाणरीत्या वर्णितोऽस्ति ।

अद्यप्रभृति साधो त्वं त्रिपुण्ड्रं भस्मना सह ।
सर्वांगोद्धूलनं नित्यंकुलधर्मपरायणः ॥
अग्निरित्यादिभिर्मन्त्रैः श्रीमत्पंचाक्षरेण वा ।
रुद्रमन्त्रजपाभ्यासपरो भवसमाहितः ॥
यावज्जीवमिदं दत्तमिष्टलिङ्गं समर्चय ।

करगाब्जपीठे विन्यस्य तद्ध्यानासक्तमानसः ॥
लिङ्गाङ्गसङ्गिनो वत्स पुनर्जन्म न विद्यते ।
युगपज्ज्ञानसंसिद्धिः स्यात्ततो मोक्षमवाप्नुयात् ॥
तस्मात्त्वं प्राणलिङ्गाङ्गसम्बन्धी भव सर्वदा ।
पंचमुद्रान्वितान्नित्यं शिवभक्तान्समर्चय ॥ इति ॥

शिवरहस्ये—

परिशुद्धेन मनसा नियमेन दृढव्रतः ।
शिवस्य लिङ्गं बिभ्राणः शिवमेव प्रपद्यते ॥
ममतत्वमविज्ञाय वेदबाह्या भवन्त्यतः ।
भजन्ति वेदबाह्यास्ते मदन्यमपरं भ्रमात् ॥
मदन्यपूजासंसक्ता लब्ध्वा जन्मानि कोटिशः ।
प्राप्नुवन्त्यतिघोराणि नरकाणि पुनः पुनः ॥
वैदिकास्तु सदाचारा वेदोक्ताचारतत्पराः ।
भजन्ति मां प्रयत्नेन वेदान्विश्वस्य सन्ततम् ॥
ये मां विश्वाधिकं रुद्रं भजन्त्यन्यपराङ्मुखाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्च त एव हि ॥
ये भस्मोद्धूलिताङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ।

ते वैदिका इति प्रोक्ता मद्भक्तास्त्व त एव हि ॥
ये लिङ्गार्चनासक्ता मम लिङ्गाङ्गसंगिनः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्च त एव हि ॥
येरुद्राक्षलसत्कण्ठा रुद्राक्षकरकङ्कणाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मध्यानपरा नित्यमन्यध्यानविवर्जिताः ।
ते वैदिका इति प्रोक्ता मद्भक्तास्त्व त एव हि ॥ इति बहूनि सन्ति अनुसंधेयानि ।

अथच शैवरत्नाकरे–

नाभेरधो लिङ्गधारी पाप्मना च सयुज्यते ।
नाभ्यूर्ध्वे लिङ्गधारी च सौभाग्यज्ञानवर्धनः ॥
लिङ्गेन कायसम्बन्धो रहितः स्यात् पिशाचवत्
निमिषार्धं वियोगेन विशेषात्पातकी भवेत् ॥

एवं पारमेश्वरागमे–

यस्य भस्म ललाटेऽस्ति कण्ठे लिङ्गं मदात्मकम्।
रुद्राक्षधारणं देहे सोऽहं देवि न संशयः ॥

इत्यादि प्रदर्शित प्रदर्शिष्यमाणवेदागमपुराणवचनैर्लिङ्गं धार्यमिति सिद्धम् । तथाच शरीरे कुत्र

कुत्र नाम कस्मिंस्थाने धार्यमिति चेत् धारणीयस्था नान्यपि भगवता श्रीव्यासमहर्षिणा तत्पुराणेष्वेवं- निर्णीतानि ॥

स्कान्दे-

उत्तमाङ्गे गले वापि कक्षे वक्षस्थलेऽपि वा ।
तथा हस्ततले वापि शिवलिङ्गं धरेत्सुधीरिति ॥

एवं कामिकागमेऽप्युक्तमस्ति ।

शङ्करसंहितायाम्-

इष्टलिङ्गमिदं साक्षादनिष्टपरिहारकम् ।
धारयेदवधानेन शरीरे सर्वदा बुधः ॥
मूर्ध्नि वा कण्ठदेशे वा कक्षे वक्षस्थलेऽपिवा ।
कुक्षौ हस्तस्थलेवापि धारयेल्लिङ्गमैश्वरम् ॥
नाभेरधस्तल्लिङ्गस्य धारणं पापकारणम् ।
जटाग्रे त्रिकभागे च मलस्थाने न धारयेत् ॥
कृत्वा निर्धाहि सततं लिङ्गं वस्त्रेण वेष्टितम् ।
मस्तके कन्धरे कुक्षौ वक्षस्यथकरस्थले ॥
शिरोदेशेऽथवा कण्ठे हस्ते वक्षस्थलेऽपि वा ।
लिङ्गधारणहीनो यस्तं त्यजेदन्त्यजं यथा ॥

कुण्डं च गोलकं चैव लिङ्गधारणवर्जितम् ।
तथा देवलकं चैव दृष्ट्वा चान्द्रायणं चरेत् ।
स्थूलाङ्गेष्विष्टलिङ्गन्तु यो न धारयति द्विजः ।
दृष्ट्वा तं सहसा पुत्र सचैलं स्नानमाचरेत् ॥
मस्तके बाहुदण्डे वा ललाटोर्ध्वं प्रदेशके ।
अलिङ्गधारणं दृष्ट्वा कुर्यात्सूर्यावलोकनम् ॥

सिद्धान्तशिखामणौ–

ओमिति ब्रह्म परमं लिङ्गाकारं महेश्वरम् ॥
सर्वावस्थासु सर्वेषु कालेषु निमिषार्धतः ।
अवियोगेन भुक्तिं च मुक्तिमिच्छन् द्विजोत्तम ।
धारयेत्पंचसु स्थानेष्वस्मिन् सक्तमानसः ॥

इत्यादिप्रमाणानुसारेणेदानीन्तना धारयन्ति पूजयन्ति च ॥

नन्वेनावता लिंगधारणेन किमसाधारणं फलम् । विशेषफलन्तु नोक्तम् । वीरशैवेतरशैवादीनां नत्तन्मतानुसारेणार्थो "दहरहः सन्ध्यामुपासीत" "स्वर्गकामो ज्योतिष्टोमेनयजैते"

त्यादिनियमानुसारप्रवर्तने स्वर्गादिफललब्धे च

किंनावल्लिंगधारणेनेतिचेन्न । सर्वमतापेक्षया विशेष फलमप्यस्ति ।

तथाच कामिकागमे-

एकेन जन्मना मुक्तिर्वीराणान्तु महेश्वरि ।
इतरेषान्तु शैवानां मुक्तिर्जन्मत्रये भवेत् ॥

इति वेदशास्त्रतत्वावगन्तारो ऋषयः सर्वे मुक्त्यर्थमेव यतन्ते । एतदपेक्षया किमाधिक्यं फलं मुक्तेराधिक्यं फलमेव नास्ति ।

एवंसूक्ष्मागमे-

वीरशैवपरो यस्तु यत्र तिष्ठति पार्वति ।
तत्तीर्थं तत्तपःशान्तिस्तत्र तिष्ठामि सर्वदा ॥
सर्वं शिवमयं पश्येदन्यभावो न विद्यते ।
लिङ्गाङ्ग ज्ञानसंपन्नो मोक्षार्हो भवति प्रिये॥इति

लिंगांगसंबन्ध पदार्थज्ञानं मोक्षसाधनमिति यावत्। (लिंगांगसम्बधस्वरूपज्ञानंचाग्रे स्फुटीकरिष्यामः) ॥

एतदर्थे पारमेश्वरागमेऽपि-

यः पश्येद्वीरशैवस्थं ब्रह्महत्यादिसम्भवैः ।
पापैर्विमुच्यते सद्यो मुच्यते च भवार्णवात् ॥
वीरशैवमतं सद्यो भोगमोक्षैकसाधनम् ।

सर्वोत्तमं मम मतं यतः सर्वोत्तमोऽस्म्यहम् ॥
न वीरशैवसदृशं मतमस्ति जगत्त्रये ।
सर्वभोगप्रदं पुण्यं शिवसायुज्यदायकम् ॥
सभस्मरुद्राक्षतनुं सलिंगं शिवयोगिनम् ।
दृष्ट्वा सद्यो विमुच्यंते पापिनोऽपि न संशयः ॥ इति ॥

एतन्मतमाहात्म्यविषयं मुक्तकंठेन व्यासमहर्षयो-पीत्थं वर्णयामासुः शंकरसंहितायाम् षट्स्थलनिर्ण-याध्याये—

क्रिमिकीटपतंगेभ्यः पशवः प्रज्ञयाधिकाः ।
पशुभ्योऽपि नराः श्रेष्ठास्तेषु श्रेष्ठा द्विजातयः ।
द्विजातिष्वधिका विप्रा विप्रेषु क्रतुबुद्धयः ।
क्रतुबुद्धिषु कर्तारस्तेभ्यः सन्यासिनोऽधिकाः ॥
तेभ्यो विज्ञानिनः श्रेष्ठास्तेषु शंकरपूजकाः ।
तेषु श्रेष्ठा महाभाग मम लिंगांगसंगिनः ॥
लिंगाङ्गसङ्गिष्वधिकः षट्स्थलज्ञानवान्पुमान् ।
तस्मादप्यधिको नास्ति त्रिषुलोकेषु सर्वदा ॥
स वंद्यः सर्वदा पूज्यः संसारविजिगीषुभिः ।
बहुनोक्तेन किं वत्स स एवाहं न संशयः ॥

कैश्चित् वीरशैवमतशास्त्राननुभवात् षट्स्थल-विचारः शैवागमे प्रसिद्ध इत्युक्तम् ॥ भक्तमहेश प्रसादिप्राणलिंगिशरणैक्यषट्स्थलानां विचारो वीर-शैवशास्त्र एव प्रसिद्धो नतु शास्त्रान्तरे ।

तथा च शिवरहस्ये–

यद्भक्तनिष्ठं निजलिंगपीठे मध्ये प्रसादी सच गोमुखेच यत्प्राणलिंगी शरणंच वृत्ते चित्ते निजै-क्यं त्विति षट्स्थलानि ॥ इति ॥

उत्तरवातुले–

इतःपरं विशेषेण वीरशैवार्चनक्रमम् ।
षट्स्थलात्मकरूपेण प्रवक्ष्यामि समासतः ॥
भक्तस्थले मुखासीनो भूतिरुद्राक्षधारणम् ।
कृत्वा भक्त्या सुपूतात्मा ततो माहेश्वरे स्थले ॥
षडक्षरं परं मंत्रमनुष्ठायात्मनिष्ठया ।
प्रसादिस्थले ह्यादाय लिङ्गं हस्तेऽवधानतः ॥
प्राणलिंगिस्थले पूजां विधाय स्वानुभूतितः ।
ततः शिवार्पणं कृत्वा स्वानन्दाच्छरणस्थले ॥
ऐक्यस्थले प्रसादोपभोगतृप्तिमवाप्य च ।

एवं समरसाद्भावात्षडङ्ग स्थलयोगतः ॥
कुर्याच्च सर्वदा सोऽयं वीरशैवार्चनक्रमः ॥
शिवायार्पितजीवत्वाद्धीरतंत्रसमुद्भवात् ।
वीरशैवसमायोगाद्धीरशैवमिति स्मृतम् ॥
सिद्धांतशिखामणौ भक्तस्थलम्-
भूतिरुद्राक्षसंयुक्तो लिङ्गधारी सदा शिवः ।
पंचाक्षरजपोद्योगी शिवभक्त इति स्मृतः ॥
श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।
अर्चनं वंदनं दास्यं सख्यमात्मानिवेदनम् ॥
एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना ।
दुर्लभा पापिनां लोके सुलभा पुण्यकर्मणाम् ॥
अपिचोत्तरवातुले-
किंकुर्वाणः समायुक्तो लिंगरूपेण जंगमम् ।
मनसा सह इत्येव भक्तिस्थल सुबुद्धिमान् ॥
अवाचिकं महानंदं महाशांतं महागुणी ।
महालिङ्गे च संयोगी लिंग भक्तस्य लक्षणम् ॥इति॥
शिवधर्मपुराणे-
सदाकाले शिवे भक्तिर्लिंगजंगमपूजनम् ।

लांछनेन शरण्यं च शक्तिस्थल सुबुद्धिमान् ॥
एवं शिवाद्वैते–
आचार्यागमवाक्येषु विश्वासी लिंगजंगमे ।
भक्त्या यो न फलाकांक्षी दाता भक्त इहोच्यते ॥
शिवयोगी शिवः साक्षादितिकैंकर्यं भक्तितः ॥
पूजनं सुमनाःकुर्वन् सद्भक्तश्चेति कीर्तितः ॥इति॥
अथ सिद्धांतशिखामणौ माहेश्वरस्थलं–
केवले सहजे दाने निष्णातः शिवतत्परः ।
ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः॥
भक्तेर्यदा समुत्कर्षो भवेद्वैराग्यदर्शनात् ।
तदा माहेश्वरः प्रोक्तो भक्तस्थिरविवेकवान् ॥
माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा ।
माहेश्वरप्रशंसादौ लिंगनिष्ठा ततः परम् ॥
पूर्वाश्रयनिरासश्च तथा द्वैतनिराकृतिः ।
आह्वानवर्जनं पश्चादष्टमूर्तिनिराकृतिः ॥
सर्वगत्वनिरासश्च शिवत्वं शिवभक्तयोः ।
एवं नवविधं प्रोक्तं माहेश्वर महास्थलम् ॥इति॥

वातुले-

आस्तिक्यबुद्धिनियमव्रतसत्यधर्मशौचादिलक्षण-परिस्फुटसच्चरित्रम् । लिंगैक्यनैष्ठिकतया महद्वीरवृत्तं माहेश्वरस्थलमिति प्रवदन्ति सन्तः ॥इति॥

एतदर्थः शिवरहस्येऽपि-

नैष्ठिकाचारसंयुक्तं मायामार्गविवर्जितम् ।
अज्ञानगुणवर्जं च माहेश्वरमितीश्वरि ॥
परस्त्रियं परार्थं च वर्जयेद्भावशुद्धिमान् ।
लिंगनिष्ठो नियुक्तात्मा माहेश्वरउदाहृतः ॥इति॥

अथ प्रसादिस्थलं सिद्धान्तशिखामणौ-

उक्तो माहेश्वरःसाक्षाल्लिंगनिष्ठादिधर्मवान् ।
कथमेषः प्रसादीति कथ्यते गणनायक ॥

इत्यगस्त्यमहार्षिणा पृष्टे भगवान् रेणुकाशिवाचार्य एवमुवाच-

लिंगनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।
मनःप्रसादयोगेन प्रसादीत्येष कथ्यते ॥
प्रसादिस्थलमित्येतदस्य माहात्म्यबोधकम् ।
अन्तरस्थलभेदेन सप्तधा परिकीर्तितम् ॥

प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः ।
ततोलिंगप्रशंसा च ततो जंगमगौरवम् ॥
ततो भक्तस्य माहात्म्यं ततः शरणकीर्तनम् ।
शिवप्रसादमाहात्म्यमिति सप्तप्रकारकम् ॥ इति ॥

शिवयोगप्रदीपिकायाम्—

शिवाचार्यातिथीनां च पूजया तत्प्रसादतः ।
प्रसादी स्यात्क्रियालिंगमन्तःप्राणात्मना यजेदिति

पुनश्चतत्रैव—

मम प्रसादसिध्यर्थं निर्मलं ज्ञानकारणम् ।
शिवप्रसादं स्वीकुर्वन् स प्रसादीति कथ्यते ॥

एवमेव वातुलशिवरहस्यादिषु कथ्यते विस्तृततया ।

अथ प्राणलिङ्गिस्थलम्—

सर्वतत्वमयः प्राणः सर्वज्ञानमयःशिवः ।
अनयोर्योगमेवैतत्प्राणलिंगमिहोच्यते ॥

इत्यादि वीरागमोक्तरीत्या पूज्यपादश्रीरेणुकशिवाचार्योऽगस्त्याय प्राणालिंगिस्थलं वक्ष्यमाणरीत्योपदिदेश—

भक्तो माहेश्वरश्चैव प्रसादीति च कीर्तितः ।

कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्यकथ्यते ॥
लिंगं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी ।
तद्रूपलिंगविज्ञानी प्राणलिंगीति कथ्यते ॥
प्राणलिंगिस्थलं चैतत् पंचस्थलसमन्वितम् ।
प्राणलिंगिस्थलं चादौ प्राणलिंगार्चनं ततः ॥
शिवयोगसमाधिश्च ततो लिंगनिजस्थलम् ।
अंगलिंगिस्थलं चाथ क्रमादेषां भिदोच्यते॥ इति ॥

वातुले—

प्राणेन्द्रियादिषु ममाहमिति प्रमोहं सम्भ्रान्तिसिद्धमपहाय समस्तमेतत । लिंगे निधाय मनसा यदनुप्रसक्तं तत्प्राणलिंगि सुचरस्थलमाहुरार्याः॥

प्राणलिंगं मनोग्राह्यं भवेत्सकलनिष्कलम् ।
तत्प्राणेष्वन्तर्मनसो लिंगमाहुरिति श्रुतिः ॥

एतत्छ्रुत्यनुसारेण वीरागमे—

मद्देहे स्थापिते लिंगे तत्प्राणेति प्रतिष्ठितम् ।
प्राणलिंगस्य सायुज्यं प्राणालिंगीतु सस्मृतः॥ इति

एतदर्थे श्वेताश्वतरोपनिषदि–
अतएवविम्वं हृदयोपलिप्तं तेजोमयो भ्राजति तत्सुधान्तम् ॥ इति ॥
माण्डूक्येच–
अन्तःशरीरे ज्योतिर्मयोहि शुभ्रोऽयं पश्यन्ति यतयः क्षीणदोषाः ॥
इत्येतादृश वाक्यमवलम्व्य शिवरहस्ये–
लिङ्गाङ्कितनतनुप्राणो लिंगजीवस्तु जीवनम् ।
लिंगतत्वपरिज्ञानी प्राणलिंगिस्थलं भवेत् ॥इति॥
तत्रावधारिके–
सच्चित्सुखात्मकं पूर्णंयदेकं ब्रह्मसंज्ञितम् ।
तद्वस्तुसमहादेव स्तद्युक्तःप्राणलिंगवान् ॥ इति ॥
अथ शरणस्थलम् वृहदारण्ये–
यथास्त्रिया सम्परिष्वक्तो नवाह्यं किंचन वेदनान्तरम् एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तेन वाह्यं किंचन वेदनान्तरमिति ।
प्रतिपाद्य सुखवान्शरणः । इति । एतच्छ्रुति मनुसृत्य शङ्करसंहितायाम्–
सती चाहं पतिर्लिंगं हृदि युक्तः स्वयं प्रभुः ।

प्रापंचिकसुखं नास्ति शरणस्थलमुत्तमम् ॥

इत्येतादृशवचनान्यवलम्ब्य भगवत्पाद जगद्गुरु रेणुकशिवाचार्यो इत्थमादिशन्ति–

अंगलिंगी ज्ञानरूपः सती ज्ञेयः शिवः पतिः ।
यत्सौख्यं तत्समावेश तद्वान् शरणनामवान् ॥
स्थलमेतत्समाख्यातं चतुर्धा धर्मभेदतः ।
आदौ शरणमाख्यातं ततस्तामसवर्जनम् ॥
ततो निर्देशमुद्दिष्टं शीलसम्पादनं ततः ।
क्रमाल्लक्षणमेतेषां कथयामि निशम्यतामिति ॥

एतदर्थे वातुले–

ज्ञानप्रकाशबलतःस्वयमेवलिंगं देहेन्द्रियादि मम रूपमितिप्रबुध्या । युक्ते समस्तविषयेऽसाति यद्विशुद्धं तत्पाहुरागमविदः शरणस्थलं हि ॥
पतिर्लिंगं सतीचाहमितियुक्तं सदातथा ।
पञ्चेंद्रियसुखं नास्ति शरणस्थलमुत्तमम् ॥ इति ॥

एवं वीरागमेऽपि–

शिवं शरणसम्बन्धं शरणं शिवसंयुतम् ।
महाज्ञानेन संयोगः शरणं सकलनिष्कलम् ॥

एष एवार्थो वासिष्ठपुराणेनापिलभ्यते । तथाच वासिष्ठपुराणे—

ज्ञानरूपोऽङ्गलिंगीस्यात् सतज्ञेयः पतिः शिवः ।
तयोर्योगेन सांख्यं यत्तद्वशाच्छरणाभिधः इत्यादीन्यनुसन्धेयानि ॥

## अथैक्यस्थलम् ।

एकमेव तद्भवत्याविकल्पो वा विकल्पोऽत्र काचन भिदास्ति नैवात्रकिंचन भिदास्त्यत्राभिदामिवमन्यमानः ॥ शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोति तदेव तद्धयं स्वकाशम् ॥

इत्युत्तरतापनीयश्रुतिमवलंब्य जगदाचार्यरेणुकशिवयोगिन एवमूचुः—

प्राणलिंगादियोगेन सुखातिशयमेयिवान् ।
शरणाख्यः शिवेनैक्यभावनोदैक्यवान् भवेत् ॥
ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुंगव ।
ऐक्यमाचारसम्पत्तिरेकभाजनमेव च ॥
सहभोजनमित्येषां क्रमाल्लक्षणमुच्यते ॥ इति ॥

वातूले-

नाहं त्वमप्रथितशब्दविभेदवृत्तिर्नप्राणदेहमन इन्द्रियभौतिकानि । सर्वं भ्रमात्मकमिदं मयि नेति भावादैक्यस्थलं समरसं सुखरूपमाहुः इति॥

अथ लिंगान् संहृत्य तेजसः शरीरत्रयं संव्याप्य तदधिष्ठानमात्मानं संज्वाल्य तत्तेज आत्मा चैतन्यरूपं बलमवष्टभ्य गुणैरैक्यं संपाद्य महास्थूलं महासूक्ष्मं महाकारणं संहृत्य मात्राभि ओतानुज्ञाविकल्परूपं चिन्तयन् ग्रसेत् ॥

इत्युत्तरतापिनीयानुसारेण शिवाद्वैते-

अखण्डपरिपूर्णो शस्त्वात्मसम्भावनोार्जितः ।
स्वप्नेऽप्यभेद सम्भ्रान्तो यस्य ऐक्यइहोदित इति॥

तत्तद्भेदलक्षणस्वरूपाणि तु ग्रन्थविस्तारभयान्न प्रदर्शितानि । आगमादिषु द्रष्टव्यम् । अथवा जगद्गुरुरेणुकभगवत्पादाः शिद्धान्तशिखामणौ विस्ताररूपेण प्रतिपादितवन्तः । तत्र द्रष्टव्यमाधिकजिज्ञासुभिः। सर्वविधवीरशैवैः षट्स्थलान्यङ्गीक्रियन्ते ॥ वीरशैवशब्दव्युत्पत्तिं तावद्विचारयामः । वीरशैव

इत्यत्र विशब्दे उपपदे 'ईर' गतौ कम्पनेच चकारात् स्तुतावपि प्रकृते स्तुत्यर्थकादादिकेरधातोः विशेषेण सर्वैः स्तूयत इतिविग्रहे "अकर्तरि च कारके संज्ञायां" मित्यनेन कर्मणि घञि, "अकः सवर्णे दीर्घे" इति सवर्णदीर्घे च वीर इति शैव इत्यत्र शिवादागत इत्यागतार्थेऽणि " तद्धितेष्वचामादे" रित्यादिवृद्धौ शैव इति ततः कर्मधारयेच वीरशैव इति निष्पन्नोऽयं शब्दः। अथवा 'रा' दाने इत्यस्माद्धातो र्विशब्दे उपपदे "आतोऽनुपसर्गे कः" । इति कप्रत्यये " आतो लोप इतिचेत्यालोपे " अन्येष्वपिदृश्यते " इति शास्त्रेण विशब्दस्य च दीर्घे वीर इति अथवा विशेषेण वांछितफलं विशेषफलं वा राति ददातीत्यर्थे विशब्दे उपपदे "आतश्चोपसर्गे" इति सूत्रेण कप्रत्यये "आतोलोप इटिचे" त्यालोपे "अन्येष्वपि दृश्यते" इति विशब्दस्य दीर्घे च वीर इति ततः शैवपदसम्बन्धेच वीरशैव इति साधुसिद्धमागमादिष्वेवमेव संसाध्येत्थम् वर्णितम् ॥

तथाच वीरागमे—

एकएवायमेतास्मिन् सर्वास्मिन् जगतीति यः ।
विशिष्ट ईर्यते यस्माद्वीर इत्यभिधीयते ॥

उत्तरवातुले–

शिवेन सहसम्बन्धः शैव मित्याहृतं बुधैः ।
उभयोः संस्फुटीभावाद्वीरशैवमिति स्मृतम् ॥
विशब्दोऽत्रविकल्पार्थो रशब्दो रहितार्थकः ।
विकल्परहितं शैवं वीरशैवमिति स्मृतम् ॥
विद्यायां शिवरूपायां विशेषाद्रमणं यतः ।
तस्मादेते महाभागा वीरशैवा इति स्मृताः ॥
गुरुलिंगं जंगमश्च प्रसादः पादवारि च ।
तदेतदेकस्वरूपं ह्यनादिर्वीरशैवकम् ॥
गुरुलिंगं जंगमश्च प्रसादोप्येकदर्शनम् ।
यत्तदाचरणं प्रोक्तं वीरशैवमहागमे ॥
जंगमं नादरूपंच लिंगं बिन्दुस्वरूपकम् ।
नादबिन्दुद्वयोपेतमनाद्यंवीरशैवकम् ॥
तस्माद्वीरव्रते निष्ठो मोक्षापेक्षयुतः प्रभुः ।
सर्वाचारेषु निरतो भक्त एवाधिको मतः ॥
दासोहि लिंगनिष्ठश्च वीरव्रतसमाश्रयः ।
सुवीरव्रतसम्पन्नोलिंगजंगमरूपकः ॥ इति ॥

संपुटाभावलक्षणान्त्वित्थं प्रतिपादयामासुर्व्या-समहर्षयो लिंगपुराणे ।

वक्ष्ये त्रिपुटिसन्धानलक्षणं शिवयोगिनाम् ।
स्थूललिंगस्य देहस्य सूक्ष्मस्य मनसस्तथा ॥
कारणस्यात्मनो नित्यं कुर्यादैक्यमतन्द्रितः ।
अनेन धारयेल्लिंगं ध्यायेच्चित्तेन शङ्करम् ॥
स्वात्मना भावयेत्पूर्णमैक्यभावेन सर्वतः ।
एतत्त्रिपुटसन्धानलक्षणं परिकीर्तितम् ॥ इति ॥
लिंगगर्भोद्भवो मन्त्रो मन्त्रगर्भोद्भवः शिवः ।
लिंगमन्त्रद्वयोरैक्यं वीरशैव इतिस्मृतः ॥ इति ॥
सर्वेषामपिशैवानां वीरशैवं महोत्तमम् ।
सुलभादेवपूजाच सुलभंच क्रियावहम् ॥
सुलभं देवपूजायाः सुलभंच क्रियाबहु ।
स्वल्पक्रिया बहुफलं वीरशैवं महेश्वरि ॥ इति ॥

एष एवार्थो वातुलेनापि लभ्यते ॥

तथाच वातुले—

फलाधिकं क्रियासूक्ष्मं वीरशैवन्तु कथ्यते ।
अन्यशैवन्तु तत्सर्वं फलमल्पं क्रिया बहु ॥इति॥

शङ्करसंहितायाम्—

यो हस्तपीठे निजलिङ्गमिष्टं विन्यस्य तल्लीनमनःप्रचारः । बाह्यक्रियासङ्कुलनिस्पृहात्मा सम्पूजयत्यङ्ग स वीरशैवः ॥ इति ॥

सिद्धान्तशिखामणौ—

विशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।
तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः ॥
विद्यायां रमते यस्मान्मायां हेयां श्वविद्धेहेत्। इत्यनेन निरुक्तेन वीरमाहेश्वरःस्मृतः । वेदान्तजन्यं यज्ज्ञानं विद्येति परिकीर्तिता ॥ विद्यायां रमते तस्यां वीर इत्यभिधीयते ॥ ज्ञानगम्यं रहस्यंच कैवल्यपदकारणम् । वीरशैवमितिज्ञेयमेतल्लक्षणमुच्यते ॥

एवमेव क्रियासारेपि—

विशब्देनोच्यते विद्या शिवजीवैक्यबोधिनी ।
तस्यां रमन्ते ये शैवा वीरशैवाः प्रकीर्तिताः ॥
विशब्दो वा विकल्पार्थो रशब्दो रहितार्थकः ।
विकल्परहितं शैवं वीरशैवं प्रचक्षते ॥ विरोधार्थो

विशब्दःस्याद्रशब्दो रहितार्थकः । विरोधरहितं शैवं वीरशैवं विदुर्बुधाः ॥ इति ॥

किं बहुना श्रुतिस्मृत्यागमोपनिषत्प्रतिपाद्या या निरवद्यहृद्याच शिवजीवैक्यबोधिका विद्या तस्यां रममाणा एव वीरशैवा इतियावत् । एतादृशाभिप्राय एव कामिकाद्यागमशैवपुराणादिषु च बहूनि प्रमाणानि सन्ति । एतावता ऋग्वेदादिप्रदर्शितप्रमाणैः शिवलिङ्गं धार्यमितिसिद्धम् । परं लिङ्गधारणस्य आभ्यन्तरबाह्यलिङ्गधारणात्मकतया शास्त्रकारैर्द्वैविध्यमुपन्यस्तम् । तथाच सिद्धान्तशिखामणौ ॥

लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकैः । बाह्यमाभ्यन्तरं चेति मुनिभिर्मोक्षकांक्षिभिः ॥ इति ॥

अतःकश्चिदाभ्यान्तरधारणविषयेऽपि विचारं करवाम । नारायणोपनिषदि दशमानुवाके—

चत्वारिश्रृङ्गात्रयोऽस्य पादाः द्वे शीर्षे सप्तहस्ता सोऽस्य त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यानाविवेश ॥ इति ॥

अत्रभाष्यम् । चत्वारिश्रृङ्गा इति । अस्य शिवस्य चत्वारि ऋग्यजुःसामाथर्वणरूपचत्वारो वेदाः श्रृगाः

मुख्यानि परमेश्वरसत्त्वे वेदानां मुख्यप्रामाणिकत्वमि-
त्यर्थः। शास्त्रयोनित्वादिनिशास्त्रे भगवता बादरायणे-
नापि तदधिकरणे पण्डितभाष्यकारैरपि तथास्य स्पष्टमु-
क्तम्। उत क्रियाचर्यायोगज्ञानरूपाशिवागमत्वतुल्या दृ
वा त्रयः सच्चिदानन्दाः। पशुपाशपतिज्ञानानि ब्रह्मवि
ष्णुकालरुद्रा वा सत्त्वरजस्तमोगुणा वा। पादाःपदःस्युः
द्वेशीर्षे । घोरा घोरात्मके द्वे शिरसी। तस्येते तनुवौ।
घोरेत्यादि श्रुत्युक्तरीत्या शरीरभेदेन शिरोभेदः ।
अग्निमुखं ब्राह्मणमुखं वा। "मुखद्वयं महेशस्य स्यादग्नि
र्ब्राह्मणस्तथेति" स्कान्दोक्तेः। अहं भक्तस्य जिह्वाग्रो-
दश्नामि कमलोद्भवेति" पुराणान्तरेच तथास्पष्टमुक्तम्।
अस्य शिवस्य। सप्तहस्ताः। आधारादि सहस्रान्त सप्त-
चक्राः । सप्तोर्ध्वलोका। अधोलोका वा स्युः। वृषभः।
ब्रह्मविष्ण्वादिभ्योऽधिकः । विश्वाधिको रुद्रोमहर्षि-
रिति । श्वेताश्वतरे तथादर्शनात् ॥ त्रिधा बद्धः। महे-
श्वरसदाशिवशिवरूपतया । इष्टप्राणभावलिङ्गात्म-
कतया । अथवा त्रिषु स्थूलसूक्ष्मकारणरूप त्याग
भोग योगाङ्गत्रयेषु सम्बद्धः त्रिधाभूतः। स शिवः।
रोरवीति। रु शब्द इत्यस्यात्र व्यवहरतीत्यर्थः । धातू-
नामनेकार्थत्वात् । नामरूपवत्करोतीत्यर्थः । तादृशो
महादेवः शिवः मर्त्यान् मर्त्याः मरणधर्माणः मनुष्या

स्नान् । स्थावरजङ्गमात्मकसर्वपदार्थान् । आविवेश । अन्तर्यामितया प्रविवेशेत्यर्थः । भगवता बादरायणेन शिवसहस्रनामावल्यादौ सर्वज्ञशिखामणि भट्टभास्करेण भट्टभाष्यमङ्गलश्लोके सर्वशास्त्रधुरन्धरामरसिंहेन–" तत्पुरुषस्य विद्महे महादेवस्य धीमहीति" रुद्रगायत्र्यां वेदपुरुषेणापि । महादेवरुद्र महेश्वरादिशब्दानां गवादिशब्दवद्रूढ्या पङ्कजादिशब्दवद्योगिकरूढया च । शिवपरत्वेन राद्धान्तितत्वात् । रूढिर्योगमपहरतीति स्थानप्रकरणलिङ्गात् समन्वय इतिन्यायाच्च महादेव शब्दस्यात्रान्यपरत्वमर्थान्नारायणपरत्वं योजितुं न शक्यत इति सिद्धान्तितम् ॥ बृहदारण्योपनिषदि ॥ "यःपृथिव्यां तिष्ठन् इत्यारभ्य योऽप्सुतिष्ठन् योऽग्नौतिष्ठन् यो वायावित्यादिभिः" सर्वान्तर्यामित्वं चिन्मात्रत्वं च प्रदर्श्य "दृष्टं द्रष्टा" "श्रुतं श्रोता" "मतो मन्ता" "विज्ञातो विज्ञाता" "नान्यतोऽस्ति द्रष्टा" "नान्यतोऽस्ति श्रोता" "नान्यतोऽस्ति मन्ता" "नान्यतोऽस्ति विज्ञातैष अन्तर्याम्यमृत" इति शिवस्य स्वप्रकाशत्वेन सर्व साक्षित्वमुक्त्वा । "सवा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमयः आपोमयो वायुमयस्तेजोमय-

स्तेजोमयः काममयः काममयः क्रोधमयः क्रोधमयो धर्ममयः सर्वमय " इति सर्वान्तर्यामित्वं सर्वमयत्वं चोक्तम् । एतावता पंचभूतेन्द्रियान्तःकरणादिषु अमृतशब्दवाच्योऽन्तर्यामि परमात्मा शिवो व्यवस्थित इति यावत् ॥

अपिच श्वेताश्वतरे–

अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये सन्निविष्टः इति ।

एवं कठवल्ल्योपनिषदि च–

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मानि तिष्ठति । ईशानो भूतभव्यस्येति ।

तत्रैव–

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो भूतभव्यस्येति ।

श्रुती रुद्रे–

अणोरणीयान्महतो महीयानात्मागुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशानं इत्यादिभिः

एनावता सर्वान्तर्यामि जगद्व्यापक श्रीशिवः साम्बः सर्वेषां हृदि निवसतीति सिद्धमतएव श्रीशङ्कराचार्यैः "हृदि पुनर्भवाभ्याम्" इतिस्तुतम् । सदाशिव एव ध्येयः उपास्यश्च एतद्विषयेऽसंख्याक-प्रमाणानि सन्ति तथाच ।

अथर्वणे–

"ईशानः शिव एको ध्येयः शिवङ्करः सर्वमन्य-त्परित्यज्य । एक एव रुद्रो नद्वितीयायतस्थे । द्यावा भूमी जनयन्देव एकः साशिव एकः" इति । पशूनां रुद्रं यजेत । ब्रह्मादयः पशवः । रुद्रः पशूनामधिपातिरिति" श्रुतिः ॥

एतच्छ्रुतिमवलम्ब्य शिवसंकल्पोपनिषदि–

योऽसौसर्वेषु वेदेषु पठ्यते ह्यजईश्वरः । अकायो निर्गुणो ह्यात्मा तन्मे मनः शिवसङ्कल्पमास्त्विति॥

सूतसंहितायाम्–

घृतकाठिन्यसन्मूर्तिः सच्चिदानन्दलक्षणः । शिवा-दन्यश्च नैवास्ते शिव एव न चापरः ॥ इति ॥

अपिच तत्रैव मुक्तिखण्डे चतुर्थाध्याये–

ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः ।

तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥ माया-पाशेन बध्नामि पशूंस्तान् कमलेक्षणे । तेषां पशूनां सर्वेषां मोचकोऽहं सुलोचने ॥ मामेव मोचकं प्राह श्रुतिः साध्वी सनातनी इति ।

शिवानन्दलहर्यां शंकराचार्यैः—

हरिब्रह्मादीनामपि निकटभाजामसुलभम् ।
चिरं याचे शम्भो शिव तव पदाम्भोजभजनमिति ॥

यजुर्वेदे—

अजात इत्येव कश्चिद्भीरुः प्रपद्य रुद्र यत्ते दक्षिणं तेन मां पाहि नित्यमिति ॥

एतदर्थे जाबालशाखायाम्—

प्रत्यग्जनास्तिष्ठति स युगस्यान्तकाले एक एव रुद्रो नद्धितीयाय तस्थे । ब्रह्मा न विष्णु र्न सूर्यो नाग्निर्नेव चन्द्रतारकाः । इति ॥

अस्मिन्नेवार्थे स्कान्दे—

विष्णुसंज्ञा ह्यसंख्याता ह्यसंख्याताः पितामहाः ।
असंख्याता सुरेन्द्राश्च नित्य एको महेश्वरः इति ।

एवमादित्यपुराणे-

असंख्याताश्च कालाश्च ह्यसंख्याताः पितामहाः । असंख्याताश्च हरयो नित्य एको महेश्वरः ॥ त्वं विश्वकर्ता तव नास्ति कर्ता त्वं विश्वभर्ता तव नास्ति भर्ता । त्वं विश्वहर्ता तव नास्ति हर्ता त्वं विश्वनाथस्तव नास्ति नाथः ॥ ब्रह्मादिकं सकलमन्यमपोह्य पुंसां ध्यातव्यमेवमभिधाय शिवंकरं त्वाम् । वक्तव्यमन्यमनपेक्ष्य विमोक्ष-हेतुमाथर्वणः परिसमाप्तिमुवाच वेदः ॥

अतएवान्नीश्वरः सकल निष्कलात्मकः सच्चिदानंद रूपः स शिवः शिवङ्करः शिव एव मुक्तिप्रदः स एव मुमुक्षुभिः सर्वैश्च पूजनीयो ध्येयश्चातएव यजुर्वेदे-

शिव एव पूज्यो भवति यजुर्वेदरूपः एकः स इतरमहिमानं व्याचष्टे इति ।

एतद्विषये चतुर्वेद तात्पर्यसङ्ग्रहे एवमुक्तमस्ति-

एकं मुखं त्रितयमीश्वरलोचनानां चत्वारि दोंषि विशदं वपुरद्भुतं ते । अत्यन्तमेव भवतामुपकार-

हेतोर्नाना भवन्ति तनवस्तेन दिव्यरूपाः ॥

इत्यादीनि ॥ स्कान्दे व्यासविष्णुसंवादे-

जगाम शरणं देवं सर्वभावेन शङ्करम् । सन्त्य-
ज्य तृणवत्सर्वान् ब्रह्मविष्ण्वादिकांस्तथा ॥

एवं सौरसंहितायाम्-

सर्वान्देवान्परित्यज्य यजेत् पंचास्यमीश्वरम् ॥
सर्वान् मन्त्रान् परित्यज्य जपेत्पंचाक्षरं सदेति ॥

ब्रह्मगीतायाम्-

विष्णुभक्त्या च मद्भक्त्या नास्ति नास्ति परागतिः ।
शम्भुभक्त्यैव सर्वेषां सत्यमेव मयोदितम् ॥ इति ॥

वायव्यसंहितायाम्-

अन्यान्देवान् परित्यज्य कर्मणा मनसा गिरा ।
तमेव साम्बमीशानं भज भावपुरःसरम् ॥ इति ॥

पाराशरपुराणे-

विहाय साम्बमीशानं भजन्ते देवतान्तरम् ।
स महाघोरसंसारे पतन्ति परिमोहिताः ॥
विहाय साम्बमीशानं ये भजन्ति विमुक्तये ।
ते महातमसा क्रान्ता न तेषां परमा गतिः ॥ इति॥

मानवपुराणे—

अथो मुमुक्षुभिः सर्वैः साम्बः सर्वेश्वराह्वयः ।
परतत्वविशेषेण ध्येय एव सदा हृदि ॥ इति ॥

न च तैत्तरीयोपनिषदि सहस्रशीर्षानुवाके नारायणोपनिषदि च—

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ।
विश्वमेवेदं पुरुषः तद्विश्वमुपजीवति ॥
पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ॥
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥
नारायणः परो ज्योतिरात्मा नारायणः परः ।
नारायणः परं ब्रह्म तत्वं नारायणः परः ॥
नारायणपरो ध्याता ध्यानं नारायणः परः ।
यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपिवा ॥
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

इत्यादयो नारायणपरत्वेनोक्तत्वाच्छिव एवोपास्य इति कथमवधार्यते । नारायणस्याप्युपासनो

पास्यत्वं सङ्गतमितिवाच्यम्। अत्र नारायणपदेन नराणां समूहः अयनं यस्येतिविग्रहमथवा नविद्यते राः धनं यस्य सः अराः निर्धन इतियावत् सः निर्धनो न भवतीति नाराः धनाधिपः कुबेरइत्यर्थः तं सख्येन अणयन्ति सल्लपतीति नारायण इतिव्युत्पत्तिमाश्रित्य शिव एव गृह्यते अत्र प्रमाणन्तु–

अराः प्राह धनाभावं सुखाभावं वदत्यणः। नतौ स्यातां यस्य भक्तेः सवै नारायणः शिवः। अरास्तुनिर्धनो ज्ञेयो नाराः किल धनाधिपः। तमणन् सल्लपन् सख्यात् स वै नारायणः शिवः इति॥

नरा अयनं यस्येति प्रज्ञायाणि नारा इत्यपि वा वाच्यम्। नाराः आपः अयनं यस्येतिवेतिविग्रहेण शिव भगवत्परएव ॥ एतद्विग्रहविषयकप्रमाणानितु कारणागमे—

आपो नारायणो रुद्रः पुरुषः कृष्णपिङ्गलः।
तस्माद्भवन्ति वै ह्यापो नारायण इति स्मृतः इति ॥

एवंस्कान्दे–

आपो नारा इति प्रोक्ता नारावै नरसूनवः। ता यदस्यायनं तेन प्रोक्तो नारायणः स्वयमिति ॥

एतद्विषये मनुस्मृतावपि—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता-
वदस्यायनं प्रोक्तं तेन नारायणः स्मृतः । इति ॥

लिङ्गपुराणेऽपि—

आपो नरस्य तनयेत्यपां नामानि शुश्रुमः । आपू-
र्यताभिरयनं कृतवानात्मनो यतः । इति ॥

ननु "सत्यं ज्ञानमनन्तं ब्रह्म"। "नारायणपरं ब्रह्मेति" श्रुतिसत्वात् । अपिच "नारायणाद्ब्रह्म जायते" नारायणाद्रुद्रो जायत इतिच "जन्माद्यस्य यतः" इतिसूत्रेणापि । आद्यस्य प्रपंचोत्पत्तेः प्राक् ब्रह्मणः जन्म उत्पत्तिः यतः यस्माद्विष्णोः सकाशादित्यर्थः । एतावता नारायणपदेन विष्णोर्बोधो जायते । अपिच "नब्रह्मानेशानः" इति ब्रह्मेशानयोर्निषेधश्रवणात् । अथच एकोहवै नारायण आसीदितिवाक्याच्च सृष्टेः पूर्वं विष्णोरेकस्यैव स्थितेर्विष्णुरेवोपास्य इतिचेन्न । "जन्माद्यस्ययतः" इतिसूत्रेण शिवस्यैव बोधो भवति। तथाचाद्यस्य ब्रह्मादिप्रपञ्चोत्पत्तेः पूर्वजातस्य विष्णोः जन्म जनिर्यतः यस्मात् शिवात् शिवादेव विष्णोरुत्पत्तिरस्ति । कुतः "सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते "इतिश्रुतिसत्वात् । अत्र रुद्रपदेन काल-

रुद्रः अथवा 'इदि' परमैश्वर्ये इत्यस्माद्धातोर्निष्पन्नेन्द्र-
शब्दस्याहृत्यर्थेणान्यत्र प्रसिद्धतत्पुरुषेशानपरपर्यायः
अर्थादष्टदिक्पालान्तर्गत ईशानोवा। इत्यत्तिनिषेधा-
वप्यस्यैव। अत्र प्रमाणन्तु। अथर्वशिखायाम्—
"किं तद्ध्यानं कोवा ध्याता कश्चध्येयः"
इत्युपक्रमप्रश्नानुबंधिना। अथर्वशिखोपसंहारे।
ध्यायीतेशानं प्रध्यायितव्यं ब्रह्मविष्णुरुद्रेन्द्रास्ते
सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्नकार-
णम् कारणन्तु ध्येयःसर्वैश्वर्यसम्पन्नसर्वेश्वरःशम्भु-
राकाशमध्ये इति ध्यानंविष्णुःध्याता रुद्रः ध्यायीते-
शानं प्रध्यायितव्य इतीशानस्य ध्येयत्वेन विहितत्वा-
त्। अपिच शम्भुराकाशमध्ये "शिवएको ध्येयः शिव-
ङ्करः सर्वमन्यत्परित्यज्येति" इतोऽतिरिक्तत्वेन वक्त-
व्यांशो नास्तीत्यभिप्रायेण स्वसमाप्तिं स्वयमेवाहाथ-
र्वणीश्रुतिः। एवं स्पष्टं श्रूयमाणत्वान्महोपनिषत्प्रसि-
द्धब्रह्मादि विश्वकारणीभूतविष्णोरपि कारणीभूतः
शिवएव एको ध्येयः॥ "ईशानःसर्वविद्यानां ईश्वरः
सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो
मेअस्तु सदाशिवस्त्विति।" एकएवरुद्रो नद्वितीयाय
तस्थे विश्वाधिको रुद्रो महर्षिरिति श्रुतिभ्यः "॥

आबालशाखायामपि ॥

" प्रत्यञ्जनस्तिष्ठति सम्यगुपास्यान्तकाले एक एव रुद्रो न द्वितीयाय तस्थे न ब्रह्मा न विष्णुर्न सूर्यो नाग्निर्नच चन्द्रतारकाः " इति ॥

नचावत्यैशानादिशब्दानां लक्षणया विष्णोः परत्वं सम्पद्यते । कुतः । विष्णोरनन्तावतारसद्भावात् । " आदित्यानामहंविष्णु " रितिगीतितत्त्वेन तदंशी भूतत्वा द्वे निवाच्यम् ॥ मुख्यब्रह्मरुद्रमध्येपठितविष्णु शब्दस्यावतारांशपरत्वासंभवात् । " एकोहवै नारायण आसीत्" इत्यवासीत्पदस्य "रोहितो लोहितादासीत् शक्तेरासीत्पराशरः " । इतिवदुत्पत्तिसत्तापरतावश्यंभावेन लक्षणं सम्पद्यत एव । अथच "यदा तमस्तन्नदिवा न रात्रिर्नसन्न चासच्छिव एव केवलः । अजात इत्येव कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन पाहि नित्यमिति" श्वेताश्वतरे प्राक्प्रदर्शितयजुर्वेदादिप्रमाणैश्च सृष्टेः पूर्वं शिवस्यैव स्थितिश्रवणेन । "सहस्राणि सहस्रशो ये रुद्रा अधिभूम्यामि " त्यादि श्रुते रुद्ररूपानन्तसत्वात् "ज्ञात्वा तं मृत्युमेति नान्यः पन्था विद्यतेऽयनाय विमुक्तये" इति श्रुतेः॥ "मृत्युञ्जयः कृत्तिवासा" इति कोशेन च सृष्टेः पूर्वं स्थितिमत्तानन्तरूपत्वमृत्युञ्जय-

त्वादिधर्मवान् शिव एव स एव ध्येयः उपास्यश्च ब्रह्मविष्ण्वादयो मरणधर्माणः अतस्ते नोपास्या ॥ अपिच भगवद्गीतायाम्—

तमेवचाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणीति ॥

श्रीविष्णुनैव स्वप्रपदनीयपुरुषं प्रदर्श्य कोऽसाविन्याकांक्षायाम् । " उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः " अत्रोत्तमपुरुषत्वंच भगसंज्ञितषड्गुणैश्वर्यसम्पन्न श्रीशिवस्यैव सम्भवति । कुतः " पुरुषो वै रुद्रः सन्महो नमोनम " इति यजुषः श्रुतेः " । एवं छान्दोग्येऽपि—" ब्रह्मणे सुपुरुषाय " इत्यारभ्य " शिवाय " इति पूर्वपठितविशेष्यश्रवणाच्च ।

कूर्मपुराणे भवगदुक्तिः—

यज्ञकर्ता च देवेन्द्रः सृष्टिकर्ता च वाक्पतिः ।
अहमेव जगत्कर्ता मम कर्ता महेश्वरः इति ।

किं बहुना सर्वथा शिव एवोपास्य इति बाढं निश्चितमित्यलं पल्लवितेन ॥

प्रकृतमनुसरामः ।

" नारायणपरब्रह्म " त्यत्र नारायणात्पर इति पञ्चमीसमासः । शङ्करसकाशाद्ब्रह्मविष्ण्वादीनामुत्पत्ति-

मन्वात् एवमेव निजगुणशिवयोगिनापिपंचमी-समासोअंगीकृतः ॥ " सर्वमिदं ब्रह्म विष्णु रुद्रास्ते सम्प्रसूयन्ते " इत्याथर्वणशिखावचनादिकं प्रदर्शितम् ॥ " नारायणः परं ब्रह्मे" ति पाठपक्षेतु " सुपांसुलुगि " तिसूत्रेण पंचम्याः स्वादेशः कल्पनीयः । अपिच इन्द्रस्य पत्नी इन्द्राणी भवस्य पत्नी भवानीतिवत् नारायणस्य पत्नी नारायणीति " इन्द्र वरुणभवशर्व" त्यादि सूत्रेणतु न सिध्यति । किन्तु " शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तुते । " इत्यत्र जगन्मातृपार्वत्यां नारायणीतिप्रयोगदर्शनात् कल्प्यते । एवं च नारायणशब्दः शिवपर इति निश्चितः ॥ एवं श्रीवीरशैवपण्डिताराध्यशिवाचार्यैरत्र नारायणशब्दस्य शिवपरत्वमिति भाष्ये " लोकवत्तु लीलाकैवल्यमित्यधिकरणे स्पष्टमित्थं प्रतिपादितम् । " नारायणं महाज्ञेयं " नारायणं नारायण शब्दवाच्यः शिवः । महाज्ञेयं महद्भिः शिवभक्ताग्रगण्यविष्वादिभिः ज्ञेयं उपासनयाज्ञेय इत्यर्थः । "विश्वात्मानं परायणम् ।" विष्ण्वादि चेतनाचेतनप्रपंचान्तर्यामितया प्रपंचात्मक इत्यर्थः । " तत्सृष्ट्वा तदेवानुप्राविशत "। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । " "य आत्मनि तिष्ठन्" इत्या-

दिश्रुतिसत्त्वात् ।सर्वान्तर्यामितया सर्वात्मकत्वंमुक्तम् ।
परंच तत् अयनंच परायणम् । विष्ण्वादीनां प्राप्य-
स्थानमित्यर्थः । "नारायणपरं ब्रह्म" । नारायणशब्द-
वाच्य शिव एव बृहत्वादिधर्माश्रयब्रह्म । " तत्त्वं
नारायणः परः " त्रिमूर्त्यतीतः नारायणःशिवः ।
तत्त्वं सर्वव्यापकशिवतत्त्वमित्यादिरीत्या विस्ताररू-
पेण व्याचक्षुः । लेखविस्तृतभयाद्दिङ्मात्रं प्रदर्शि-
तम् । केवलं पण्डिताराध्या एवव्यरचन्निति । किन्तु
व्योमताराध्योद्भटाराध्य नीलकण्ठशिवाचार्य भास्कर-
भट्टशिवाचार्यादि श्रौतवीरशैवसिद्धान्तस्थापकाचा-
र्यैरपिच सर्वशैवशास्त्रज्ञानधुरन्धर हरदत्ताचार्याप्प-
य्यदीक्षितादिभिश्च पाणिनीयशास्त्रानुसारेण शिवे-
तरस्व बाधानिरसनं कृत्वा समग्रसहस्रशीर्षानुवाक-
स्य शिवपरत्वेन राद्धान्तितम् ॥

अस्यानुवाकस्य भगवन्नारायणमहर्षयः "सहस्रशी-
र्ष" मित्यत्रैवं प्रतिपादयामासुः । "सहस्रशीर्षमि-
ति" ॥ सहस्रशब्दोऽत्रानन्तवाचको भवति । सहस्र-
शीर्षम् । "सर्वाननशिरोग्रीव" इत्युक्तरीत्या अनंत-
शीर्षवानित्यर्थः ।दीव्यतीतिदेवः । प्रकाशकः । 'दिवु'
क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नका-
न्तिगतिषु । "तस्य भासा सर्वमिदं विभाती" तिश्रु-

स्युक्तरीत्या सर्वपदार्थप्रकाशक इत्यर्थः। "विश्वाक्षं" अनन्ताक्षम्। "विश्वशम्भुवम्"। विश्वस्य विष्ण्वादि-चेतनाचेतनात्मकप्रपंचस्य शं सुखंयस्माद्भवति सः। तथोक्तः। सर्वत्र वचनव्यत्ययश्छांदसः। "शिवएको-ध्येयः "इत्याद्यथर्वशिखोपनिषद्रीत्या शिवएवसर्वैः सर्वविद्यासूपास्यइत्यर्थः। " विश्वंनारायणंदेवम्"। विश्वं प्रपंचम्। नारायणम्। तच्छब्दवाच्यं देवं महा देवः। तदुपादानत्वेन तत्स्वरूपत्वं युक्तं भवति। "अक्षरम्।" नाशराहितः। अतएव लोकेशिवस्यैव मृत्युञ्जयइतिप्रसिद्धिः"परमंप्रभुं" विष्ण्वादिसर्वजी वनियामक इत्यर्थः। "ईश्वरःसर्वभूतानामितिश्रुतेः"। "विश्वतःपरमम्"। प्रपंचादुत्कृष्टः। अधिष्ठानत्वा-त्ततोऽधिकपरिमाणवानित्यर्थः। "नित्यं।" त्रैकालि-काबाध्यरूप इतियावत्। "सत्यंज्ञानमनन्तंब्रह्मेति श्रुतेः"। "हरिः।" विष्ण्वादीन् हरतीति हरिः। शिवः। "सर्वभूतदमनायनम" इतिश्रुतेः। "विश्वं" प्रपंचम्। विष्ण्वादिचेतनाचेतनप्रपंचमितियावत्। "नारायणम्"। नारायणशब्दवाच्यः हरिशब्दवा-च्यः शिवएव। नारायणशब्दवाच्यंशिवम्। "नारा-यणंहरिम्"। विष्ण्वादिसंहारकमितियावत्। "हरिं हरन्तमिति श्रुतेः" अत्र नारायणं हरतीत्यलुक्स-

मासो बोध्यः। नारसिंहावतारलब्धं विष्णुं शरभाव-
तारेण शिवः संहृतः । अर्थात्नरसिंहाद्यवतारान् शर-
भसाल्वादिरूपेण शिवः संहारं कृत इति यावत् ए-
वमेव भगवता बादरायणेन स्कान्दे स्पष्टमुपदिष्टत्वा-
च्च । यद्वा अष्टमूर्त्यात्मकत्वेन शिवस्य सर्वे शिव-
शरीरत्वेन शरीरशरीरिणोरभेदाच्च ब्रह्मविष्ण्वादि
चेतनाचेतनप्रपंचं सर्वं शिवमयं शिव एवेति भावः
ननु कथं पुरुषशब्दवाच्यस्य शिवस्य विश्वात्मकत्व
मित्याशङ्कायामाह । " पुरुषएवेदं सर्वं तद्विश्वमु-
पजीवति " । ' इदं ' परिदृश्यमानम् । ' सर्वं '
अचेतनं । तत् चेतनविष्ण्वादिकं । यतः । शिवात्
उपजीवति । रक्ष्यंते । अतः सर्वं सएवेत्यर्थः ।
पूर्वं पराशिवोपादानत्वेन पराशिवशरीरत्वेन विश्व-
स्य तादात्म्यमुक्तमिदानीन्तु परशिवपालकत्वेन ता-
दात्म्यमुक्तमतो न पुनरुक्तिरिति ज्ञेयम् । " पुरुषो वै
रुद्रस्तन्महो नमोनम " इत्यादि श्रुतिशतेषु शिवस्य
पुरुषशब्दवाच्यत्वोपदेशादतो न शङ्कावकाशः ।
" पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् "
विश्वस्य । अचेतनप्रपंचस्य । पतिम् । प्रभुम् । आत्मा ।
विष्ण्वादिजीवसमूहः। तस्य ईश्वरम् । अन्तर्यामितया
स्थित्वा बुद्धिप्रेरको भवतीत्यर्थः । प्रभुर्वाञ्नियामको

भवतु । " य आत्मनि तिष्ठन् " इत्यादि श्रुतिषु । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती " त्यादि स्मृतिषुच तथा श्रूयते । " भीषास्माद्वातः पवते " त्यादिना परमेश्वराज्ञापालकत्वं च युक्तं भवति । शाश्वतं नाशप्रतियोगी तं । शिवम् शिवशब्दवाच्यः । अच्युतम् अच्युतशरीरयुक्त इत्यर्थः । अत्रशाश्वताच्युतशब्दाभ्यां परमेश्वरमूर्तिद्वयस्यापि नित्यत्वं सूच्यते । अतो न पौनरुक्तिः । "स्थिरेभिरङ्गैः पुरुरूपउग्र" इति श्रुत्यन्तरे परमेश्वरसाकारस्यापि नित्यत्वोपदेशादिति यावत् । स्वेच्छाधीनविग्रहत्वात्तस्य परिणामत्वादि दोषप्रसङ्गो न प्रसज्येदिति राद्धान्तितः ।

एवं समग्रानुवाकस्य लेखविस्तारभयात्संक्षिप्यतेऽस्माभिः । केचित्तु एतादृशवेदागमपुराणाद्यैः प्रतिपादितनिर्णीतविषयज्ञानाभावेन वक्ष्यमाणनिर्णयज्ञानाभावाच्च " सर्वेषां वाक्यानामेवंप्रकारेण योजयितुमशक्यत्वम् " " देवयोरैक्यं न मानयन्ती " तिच, यदाहुस्तद्वचनद्वयं नोचितमिति किमुत । कुतः । स्कान्दे—

रुद्रस्य ब्रह्मविष्णुभ्यां साम्यं वाञ्छन्ति ये नराः ।

तेषां वंशस्य साङ्कर्यमस्तीति ममनिश्चयः ॥
शिवं ब्रह्मादिभिस्तुल्यं शिवां ब्राह्म्यादिशक्तिभिः ।
स्वगुरुं प्राकृतैः सार्धं ये स्मरन्ति वदन्ति वा ॥
तेषां पापान्यनश्यन्ति श्रीमत्पंचनदाश्रयात् ।
शिवं ब्रह्मादिभिस्तुल्यं स्वगुरुं प्राकृतैः समम् ॥
शिवविद्यामवेदार्थं मनुते यस्तु मानवः ।
स पापी दुर्मदः क्रूरः श्वपचः श्वपचाधमः ॥
यो महादेवमन्येन हीनदेवेन दुर्मतिः ।
सकृत्साधारणं ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः ॥
विष्ण्वादिदेवतानां वा विश्वाधिक्यं वदन्ति ये ।
अधोमुखोर्ध्वपादास्ते यास्यन्ति नरकार्णवम् ॥
यथास्यापानयोः साम्यं छिद्रत्वेऽपि नविद्यते ।
तथैकत्वेऽपि सर्वेषां रुद्रसाम्यं नविद्यते ॥
महापापवतां सर्वजन्मकोटिषु सुव्रताः ।
विष्णुविश्वाधिको भाति नारकास्ते न संशयः ।
रुद्रस्य ब्रह्मविष्णुभ्यामाधिक्यं प्रवदन्ति ये ।
तेषां वंशस्य वैशिष्ट्यमस्तीति मम निश्चयः॥ इति ॥

अपिच–

पुराणेषु समुत्कृष्टा कलौ पाराशरी स्मृतिः ।
इत्थयन्त्यथ सैवेयमुक्तमर्थं पुनः पुनः ॥
अथातः सम्प्रवक्ष्यामि चरितं पापकर्मिणाम् ।
शृणु तत्परिहाराय विप्रवेदार्थवित्तम ॥
महादेवंच विष्णुंच ब्रह्माणं देवतान्तरम् ।
सदा निन्दन्ति मोहेन मनुष्याः पापकारिणः ॥
महादेवसमं विष्णुं ब्रह्माणं देवतान्तरम् ।
मन्यन्ते विप्र मोहेन मनुष्याः पापबुद्धयः ॥
देवानां प्रथमं देवं जन्मनाशविवर्जितम् ।
रुद्रं विश्वाधिकं नैव मन्यन्ते पापकर्मिणः ॥
चेतना चेतनस्यास्य जगतो मूलकारणम् ॥

इत्याद्यनेकप्रमाणानि सन्ति। एतादृशप्रमाणबाहुल्यं दृष्ट्वा विदित्वा च कथं वदेयुर्वीरशैवा देवयोरैक्यमिति। यत नेऽपि किं करिष्यन्ति शिवाधिक्य बुद्धिस्तु विना पुण्येन न जायते नृणाम् । ईश्वरसंकेतोऽप्येवमेवास्ति किंबहुना एतद्विषये स्कान्दे सूतसंहितायांच—

अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
हरःश्रेष्ठो हरेःसाक्षादितिबुद्धिःप्रजायते ॥

इत्यलंपल्लवितेन ॥

नचैवंभावना हृदिस्थस्यशिवस्य लिङ्गरूपत्वे किंप्रमाणम्। प्रमाणाभावान्नान्तर्लिङ्गधारणं सिद्धमितिवाच्यम् । बहूनिप्रमाणानिसन्ति । तथाच शङ्करसंहितायाम् परिभागे वीरमाहेश्वरप्रशंसायाम्—

लिङ्गं गमकमित्याहुरपरे लिङ्गवित्तमाः ।
गम्यते योगिभिर्यातैर्गमज्ञानार्थदर्शनात् ॥
तथानिरूप्यते माद्भिर्लिङ्गं चिन्मात्ररूपतः ।
एतस्मात्कारणाच्चापि प्रसिद्धं परमात्मनः ॥
लिङ्गरूपत्वमीशस्य नीलकण्ठस्य शूलिनः ।
अतउक्तप्रकारेण लिङ्गरूपो महेश्वरः ॥
इतिवेदान्ततंत्रेषु गीयते तत्वविन्तमैः ॥ इति ॥

अथच सूतसंहितायांयज्ञवैभवखण्डेऽष्टविंशाध्याये—

अथातः सम्प्रवक्ष्यामि शिवलिङ्गं समासतः ।
यस्य विज्ञानमात्रेण विमुक्तो मानवो भवेत् ॥
शिवएवभवेल्लिङ्गं लिङ्गं गमकमेवहि ।

शिवेन गम्यते सर्वं शिवेनान्येनगम्यते ॥इति॥

एतद्विषये क्रियासारकारेणैवं प्रतिपाद्यते—

शिवएवहिलिङ्गंच लिङ्गरूपः शिवःस्वयम् ।
महालिङ्गस्वरूपोऽयं शङ्करोऽयं सदाशिवः ॥इति॥

विष्णुकृतशिवस्तोत्रे—

अनादिमलसंसाररोगवैद्याय शम्भवे ।
नमःशिवायशान्ताय ब्रह्मणेलिङ्गमूर्तये ॥ इति ॥

ईशोपनिषदि—"लिङ्गस्तुषुम" रित्यनेनच शिवस्यालिङ्गरूपत्वं स्पष्टम् । अन्तर्लिङ्गधारणानुसन्धानविषयेतु व्यासमहर्षयो लिङ्गपुराणे तावदेवंप्रतिपादयन्तिस्म ॥ तथाच लिङ्गपुराणे—

वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम् ।
अन्तर्लिङ्गानुसन्धाने शुचिर्बाह्ये नजायते ॥
तस्मात्सर्वप्रयत्नेन गुरुणा शास्त्रवेदिना ।
अनुग्रहाय यद्दत्तं तल्लिङ्गं पूजतेत्सदा ॥

इत्यन्तर्लिङ्गानुसन्धानमुक्तम् ॥ एवं वामनपुराणे—

ततोऽव्ययात्मा सहरिःस्वहृत्पङ्कजशायिनम् ।
दर्शयामास देवानां मुरारिर्लिङ्गमैश्वरम् ॥ इति ॥

इत्यनेन माधव हृदयान्तर्वर्तिप्राणलिङ्गोपासना प्रदर्शिता ॥

चिद्रूपं परमं लिंगं शाङ्करं सर्वकारणम् ।
यस्तस्य धारणं चित्ते तदान्तरमुदाहृतम् ॥
मूलाधारे च हृदये भ्रूमध्ये सर्वदेहिनाम् ।
ज्योतिर्लिंगं सदाभाति यद्ब्रह्मेत्याहुरागमाः ॥
आधारे हृदये वापि भ्रूमध्येवा निरन्तरम् ।
ज्योतिर्लिंगानुसंधानमान्तरंलिंगधारणमिति ॥

सिद्धान्तशिखामणौ जगदाचार्येण गुरुभगवता प्रतिपादितम् ॥ अपिच—

आधारे कनकप्रख्यं हृदये विद्रुमप्रभम् ।
भ्रूमध्ये स्फटिकच्छायं लिंगं योगी विभावयेत् ॥

इत्यागमवचनान्यपि प्रमाणीभूतानि—

अन्तर्लिंगानुसन्धानमात्मविद्यापरिश्रमः ।
गुरूपासनशक्तिश्च कारणं मोक्षसाधनम् ॥

इतिप्रमाणेनान्तर्लिङ्गधारणस्यमोक्षसम्पत्कारणरूपफलंप्रदर्शितम् ॥

नन्वेवं तर्हि अन्तर्लिङ्गधारणमेवास्तु किमर्थं बाह्य-

लिङ्गधारणम् । मास्तु । कैरङ्गीकृतं नंकनापि इतिचेन्न ॥ अन्तर्लिङ्गस्वरूपावगमाय तत्स्वरूपबोधकमिष्टलिङ्गं प्राणलिङ्गवदवश्यं धार्यं धार्यं नाडिज्ञानार्थंद्रष्टुंच ॥ पयः पिपासूनां गेहएव गौरास्ति । तथाच गोस्थितिमात्रेण पिपासानिवृत्तिस्तुनजायतेकिल । अवश्यंभवितव्या । कुतश्चेत् गोरुदरएवदुग्धंवर्तते । अस्तीति सर्वैर्ज्ञायत-एव किन्त्वन्तःस्थितं पयोरूपद्रव्यं बहिर्निष्कास्य यावन्नपीयते तावत् पिपासा न नश्यति । गोः सकाशाद्यदा पयो निष्कास्यते तदा पयःशुभ्रं पानेन पयःस्वादुइतिज्ञानंसम्पद्यते ॥ अपिचैवं यथागोव्रणं गोघृतलेपनात्तंश्यति । तथाचघृतं तदुदरएवास्तीति लेपनाभावे न नंक्ष्यति । तथाएतदर्थे-

गवांसार्पिः शरीरस्थं नकरोत्यात्मपोषणम् ।
निःसृतं कर्मरचितं पुनस्तासांतुभेषजम् ॥
एवमन्तःशरीरस्थसार्पिवत्परमेश्वरः ।
विनार्चोपासनां देवो नकरोतिहितं नृषु ॥इति ।

एवंशर्मीगर्भेऽग्निरस्तीति प्रतीतिःखलु तथाच यथा यज्ञकर्मण्यरणिमन्थनंविना वह्निर्नायाति तथा ॥

प्रकाशते यथा नाग्निररण्यामिन्धनंविना ।
क्रियांविना तथान्तस्थोनप्रकाशीभवेच्छिवः॥इति॥

एवंदीपतूलिकायामप्यग्निवर्तनमेव । एतच्च दर्पणादिक्रियांविना यथानमस्कर्ता भवति तथा अपिच लोकेनावद्दर्पणे स्वमुखप्रतिच्छायादिदृक्षया धृतेऽपिदर्पणमनयाऽदृश्यतद्विनि व्यवहारस्तद्वत् स्थानत्रयवर्तिमहाज्योतिर्लिङ्गरूपकेष्टलिङ्गं निजरूपं द्रष्टुमिच्छया धृतेऽपि सेष्टलिङ्गं धारयतीत्यनया युक्त्या दर्पणवन्महाज्योतिर्लिङ्गप्रतिरूपकमन्तर्लिङ्गनिजरूपप्रदर्शकमिष्टलिङ्गं प्राणलिङ्गवद्वाह्येऽवश्यं धार्यमेव । अतो वीरागमे—

इष्टलिङ्गमविश्वस्य प्राणलिङ्गं नपश्यति ।
दर्पणप्रतिविम्बानां यथारूपं तथा भवेदिति ॥

अतः सिद्धान्तशिखामणौ—

अन्तर्धारयितुं लिङ्गमशक्तः शक्तएववा ।
वाह्येच धारयेल्लिंग तद्रूपमिति निश्चयात् ॥

इत्युक्तम् ॥

नच बाह्यलिङ्गधारणाराधनमेवालमितिवाच्यम् ।

वाह्ये जाग्रदवस्थायामनुभूतार्थमेवहि ।
अन्तःस्वप्नदशायान्तु यथेहपरिदृश्यते ॥
तथान्तर्यजनं नित्यं वहिर्यजनपूर्वकम् ।
वहिर्यागविहीनश्चेदन्तर्यागो नसिध्यति ॥

तद्बाह्यांगेचान्तरंगे परमप्रीतिपूर्वकम् ।
कर्तव्यं स्वेष्टलिंगस्यार्चनन्तु मनीषिभिः ॥

इत्याद्यागमवचनेभ्यः ॥

इष्टलिंगंप्राणलिंगमेकीकृत्यसमर्चयेत् ।
मणिमालां मातृमालामेकीकृत्य जपेत्सदा ॥
मातृका प्राणलिंगस्य मणिमालेष्टरूपिणः ।

इत्यादिपुराणवचनेभ्यश्च बाह्याभ्यन्तरयोरिष्टप्राणलिङ्गे धार्ये पूजनीये चवीरशैवेरितिसिद्धम् ॥

अतो महानारायणोपनिषदि चतुर्दशानुवाके नारायणमहर्षेय इत्थमुक्तः निधनपतये नमः । निधनपतान्तिकायनमः । ऊर्ध्वायनमः । ऊर्ध्वलिङ्गायनमः । हिरण्यायनमः। हिरण्यलिङ्गायनमः। सुवर्णायनमः। सुवर्णलिङ्गायनमः । दिव्यायनमः । दिव्यलिङ्गाय नमः । भवाय नमः। भवलिंगाय नमः। शर्वायनमः। सर्वलिङ्गायनमः । शिवाय नमः । शिवलिङ्गायनमः । ज्वलायनमः। ज्वललिङ्गाय नमः। आत्मायनमः। आत्मलिङ्गाय नमः । परमायनमः । परमलिङ्गायनमः ।

एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयाति पाणि मन्त्रं पवित्रम् इति ।

अत्रत्य भाष्यम् ॥

सूर्यो मुख्यशरीरं स्याच्छिवस्य परमात्मनः ।
आदित्य हृदये शिवः

इत्यादिस्कान्दवचनरीत्या ब्रह्मापर्वे सूर्यमण्डलान्तर्वर्तित्वेन शिवस्योपासनमुक्त्वेदानीं स्वशरीरे परमेश्वरध्यानधारणोपासनान्युपदिशति " निधनपतये नम" इत्यादिना

" निधनपतयेनमः " निधनं सर्वभूतलयात्मकप्रलयम् । तस्य पतिः । प्रभुः सर्वसंहारकर्तेत्यर्थः । एतेन महाप्रलयसाक्षित्वं शिवस्योपदिशति ।

" यदा तमस्तन्न दिवा न रात्रिर्नसन्नचासच्छिव एव केवलः " इति श्वेताश्वतरे तथाश्रूयते-

" निधनपतान्तिकाय नमः " निधनस्य मरणस्य पतिः प्रभुः । कर्तेत्यर्थः । यमः । तस्य अन्तकः । संहर्ता-शिवः । तस्मैनमः । तन्नमस्करोमीतिभावः । यमस्यापि संहारकर्तृत्वदर्शनात्ततोऽधिकता शिवस्य किमायातामिति शङ्कानिरासार्थमुत्तरवाक्यमुक्तम् ॥

" यस्य ब्रह्मच क्षत्रं चोभे भवत ओदनम् " ।
"अत्ताचराचरग्रहणात्" इत्यादिश्रुति सूत्रेषु संहा-

रकर्तृत्वस्य परब्रह्मधर्मोपदेशात् सर्वसंहारकशिव एव परब्रह्मेतिनिर्धार्यते ॥ एतास्थितेरप्युपलक्षणतया जगज्जननादिकारणभूतनिष्कलपरशिवतत्वमेतद्वाक्येनोपदिश्यते ॥

" ऊर्ध्वायनमः " इत्यनेन महदादि सर्वतत्वोर्ध्वगतशुद्धसत्वप्रधान मायाशक्तिरुच्यते। सैवचिच्छक्तिरित्यभिहिता।

" उर्ध्वलिङ्गायनमः " इत्यनेन चिच्छक्त्यवच्छिन्न सदाशिवतत्वमुपदिश्यते।

" हिरण्यायनमः " इत्यनेन ( पश्चिमचक्रम् ) तत्रस्थितगुणत्रयसमष्ट्यात्मक महातमोरूपाविद्याशक्तिरुच्यते।

" हिरण्यलिङ्गाय नमः " इत्यनेन तदवच्छिन्नं स्वयंप्रकाशमानं भावलिङ्गमभिधीयते।

"सुवर्णायनमः" इत्यनेन ( शिखाचक्रम् ) तत्रस्थितमलिनसत्वात्मकशक्तिरुच्यते।

" सुवर्णलिङ्गायनम " इत्यनेन तदवच्छिन्नं चित्कलात्मकप्राणलिङ्गं निर्णीयते।

" दिव्यायनम " इत्यनेन ( सहस्रारम् ) तत्रस्थगुणत्रयप्राचुर्यात्मक महाशक्तिश्च बोध्यते।

" दिव्यलिङ्गायनमः " इत्यनेन तदवच्छिन्नस्वप्रकाशमानस्वेष्टलिङ्गमुपादिश्यते ।

" भवायनमः " इत्यनेन ( आज्ञेयचक्रम् ) तत्रस्थ शुद्धान्तःकरणं च बोध्यते ।

" भवलिंगायनमः " इत्यनेन तदवच्छिन्नमहालिङ्गं श्रूयते

" शर्वायनमः " इत्यनेन ( विशुद्धचक्रम् ) तत्रस्थितव्योमतत्वानुगतपराशक्तिश्च बोध्यते ।

" शर्वलिंगायनमः " इत्यनेनतदवच्छिन्नप्रसादलिङ्गं निरूप्यते ।

" शिवायनमः " इत्यनेन ( अनाहतचक्रम् ) तत्रस्थपवनतत्वात्मकादिशक्तिश्च निरूप्यते ॥

"शिवलिंगायनमः" इत्यनेनतदवच्छिन्नचरलिङ्गमुच्यते ।

" ज्वलायनमः " इत्यनेन ( मणिपूरचक्रम् ) तत्रस्थतेजस्तत्वात्मकेच्छाशक्तिश्च बोध्यते ।

" ज्वललिंगायनम " इत्यनेनतदवच्छिन्नशिवलिङ्गमुपादिश्यते ।

" आत्मायनम " इत्यनेन ( स्वाधिष्ठानचक्रम् )

तत्रस्थितजलतत्वात्मकज्ञानशक्तिश्च बोध्यते ।
" आत्मलिंगायनमः " इत्यनेन तदवच्छिन्नगुरु-लिङ्गमुपदिश्यते ।
" परमायनमः " इत्यनेन ( आधारचक्रम् ) तत्र-स्थिताक्षित्यात्मक क्रियाशक्तिश्च बोध्यते ।
" परमलिंगायनम " इत्यनेन तदवछिन्नाधारलिङ्ग मुपदिश्यते ।
एतत्सोमस्यसूर्यस्य सर्वलिंगंस्थापयातिपाणिमन्त्रं पवित्रम्" इत्यनेनैतद्दशविधलिङ्गात्मकसूर्यस्य सूर्य मंडलांतर्वर्तिनः सोमस्य । उमाशक्तिविशिष्टस्य शिवस्य पाणिमन्त्रम् करपावनकरम् । पवित्रं पावनं लिङ्गं लिङ्गरूपशरीरम् सर्वं सर्वेत्यर्थः । रूपव्यत्ययश्छान्दसः । स्थापयति धारयन्तीत्यर्थः । एतन्मन्त्रस्य भगवता शिवेन सिद्धान्तागमे–

प्रलयं निधनं ख्यातं सर्वभूतलयात्मकम् ।
तत्कर्तृत्वं महेशस्य सत्वात्तत्पतिरीश्वरः ॥
तस्मै नमो महेशाय तमःसाक्षिस्वरूपिणे ।
निधनाधिपतिः कालः सर्वसंहारकारणात् ॥
तस्यान्तकत्वं हर्तृत्वं शिवस्यैवनिरूप्यते ।

इत्यारभ्य
एतत्सूर्यस्य मित्रस्य मण्डलान्तर्वर्तिनः ।
सोमस्य पार्वतीशस्य लिङ्गं भवभयापहम् ॥
सर्वेषु भक्तदेहेषु स्थापयेद्गुरुणा सदा ।
पवित्राणां पवित्रत्वात्पवित्रमिति कथ्यते ॥
तस्माद्धार्यं सदालिङ्गंपाणिमन्त्रेतिमन्त्रतः ।
पाणौ लिङ्गं समासाद्य दीक्षाकाले गुरुःशिवम्॥
येन स्मरति तन्मत्रं पाणिमन्त्रं वदन्तिहि ।
मननात्पूजनाद्भक्तान् त्रायतीति निरुक्तितः ।
पाणिमन्त्रमितिप्रोक्तं तल्लिङ्गं ब्रह्मशाश्वतम्
इत्यादिना व्याख्यानं कृतः एतच्छ्रुतिवाक्यमवलम्ब्य
लिङ्गपुराणे तावदेवं प्रतिपादितमस्ति–
वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च ।
ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम् ।
इत्युपक्रम्य–
यजुरप्याहसर्वेवै लिङ्गंस्थापयतीति च ।
तस्माद्धार्यं महालिंगं पाणिमन्त्रेतिमन्त्रतः ।
पाणौ लिंगंविनिक्षिप्य दीक्षाकाले गुरुः शिवम् ।

येन स्तुवाति तन्मन्त्रं पाणिमन्त्रं वदन्ति हि ।
पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् ।
पवित्रकरणात्पुंसां पवित्रमिति कथ्यते ॥
अतः सर्वेषु कालेषु धारयेल्लिङ्गमुत्तमम् ।
गच्छन् तिष्ठन् स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि॥
शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् ।
लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोहरम् ॥
अर्चयन् गन्धपुष्पाद्यैः करपीठे समाहितः ।
नित्यानि कर्मवृन्दानि तथा नैमित्तिकानि च ॥
शिवार्पणधिया कुर्यात् सम्यग्ज्ञानाभिवृद्धये ।
कुर्याल्लिङ्गाङ्गसम्बन्धी द्विजन्मा कर्मवर्जितः ॥

इत्यादिना वाक्ये तावदिष्टलिङ्गधारणं कर्तव्यमिति व्यासमहर्षिणा निर्णीतम् । केवलं व्यासेनैव प्रतिपादितमिति न "एतत्सोमस्य सूर्यस्य सर्वं लिङ्गं स्थापयति" तिवाक्यस्य श्रीकरभाष्ये सर्वत्र प्रसिद्धोपदेशाधिकरणे पण्डितभाष्यकारैरपि बहुधा राध्दांतितम् ॥ अपिच भवानीशङ्काराराध्य परमन कालानल, नन्दिकेश्वर, वज्रनखाराध्यादि वीरशैव पूर्वाचार्यैर्विपक्ष पूर्वपक्षदुर्निरीक्षणत्वेन बा-

ष्टलिङ्गधारणम श्रुत्यागम पुराणस्मृतीतिहासादि-
भिर्बहुधा सिद्धमित्तम ॥ ननु लिङ्गलोडादीनामे-
व विधायकताबोधकत्वात। प्रकृते स्थापयतीति ल-
डन्तत्वेन विध्यभावइतिचेन्न लिङ्गधारणस्यापूर्व-
विधित्वेन। "पाणिमंत्रं पवित्र" मिति विशेषपद-
सत्वात। पाण्यधिकरणकपूजातु लिङ्गधारणं वि-
ना नसंभवत्येव। नच स्थापयतीत्यनेन भूम्यामेव।
स्थापनमिति कल्प्यते। कुतः। लोके तादृशव्यव-
हारोऽपि दृश्यते एवंच "पाणिमन्त्रं पवित्रमि"
ति विशेषणपदस्यापि पाणिना अभिमन्त्रितं षडध्व-
शोधनादिना संस्कृतम्। अतएव पवित्रमित्यर्थकं
सत् सार्थकं भवतीति वाच्यम। अत्र भूमिशरीर-
साधारण्येनैव लिङ्गस्थापनम्। श्रुतेः संकोचासहि-
ष्णुत्वात विनिगमकाभावाच्च। अथच संदिग्धे तु
वाक्यशेषादितिन्यायेन पाणिमंत्रमिति वाक्यशेष-
बलाच्छरीरएव लिङ्गस्थापनमिति सिध्यति। पा-
ण्यधिकरणकपूजायाः स्थावरेऽप्रसक्तेः। बलीयान
प्रकरणविरोधश्च॥ "समर्थः पदविधि" रिति भगव-
त्पाणिन्यनुशासनात पाणिना मन्त्रनात्त्रायतइति
तृतीयासमासाश्रयणेन स्थावरेऽपि नविरोध इति
वक्तुं न शक्यते। "सापेक्षमसमर्थव" दिति वार्ति-

कस्य वैयर्थ्यापत्तेश्च । गमकत्वात्समास इति स्वीक्रियते चेत् पाणिपदं निरर्थकं स्यादित्यलं व्याकरणविचारेण । अत्रकैश्चित् एषांमन्त्राणां भाष्यव्याख्यानानुपलंभात ववयेषांनियोगोऽस्तीति स्पष्टं वक्तुं नशक्यत इति यदुक्तम् सहसा तत्केवलं साहसमात्रमेव कुत्र कस्मिन स्थाने ववनियोक्तव्यमिति विषये भाष्यादिकं प्रदर्शितम् ॥ आगमप्रमाणानितु दर्शितान्येव ॥ कैर्धारितमित्याशङ्का निवृत्यर्थमागमपुराणादि प्रमाणवचनानि बहूनि सन्ति । तथा च दिव्यागमे—

भवानी मस्तके लिङ्गं विष्णुर्वक्षस्थले तथा ।
कक्षे कमलपुत्रस्तु सुरेन्द्रश्च करे तथेति ॥
कक्ष्ये ब्रह्मा करे विष्णुः कण्ठे माहेश्वरः सदा ।
व्योमातीतस्तुशिरसि मुखे रुद्रस्तु धारयेत् ॥
ईश्वरोप्यमलैक्येच उत्तमाङ्गे सदाशिवः ।
इति देवाः सदा धृत्वा लिंगंचयजते मुदेति ॥

वातुलतन्त्रे—

ब्रह्मविष्णुसुरेशादिदेवताः परया मुदा ।
शिरोभिर्धारयन्त्येताः शिवलिङ्गमहर्निशम् ॥

अक्षपादादयः सर्वाः शक्तयः सर्वदा मुदा ।
धारयन्त्यलिकाग्रे तु शिवलिंगञ्च सादरम् ॥
विनिर्भिद्य तथागात्रं विवरं लोहपात्रके ।
शिवलिङ्गं विनिक्षिप्य पूजयन्ति च राक्षसाः ॥
कण्ठेषु हरकण्ठादिमुनयो मनवस्तथा ।
सर्वदा शिवलिङ्गन्तु धारयन्ति यजन्तिचेति ॥
एतद्विषये भगवान्व्यासोऽप्येवमुवाच—

सुरासुरेन्द्रसन्मौलिनिर्मार्ल्यचरणाम्बुजम् ।
गंगाधरं प्रणम्याहं कलानिधिकलाधरम् ॥
इतिहासेषु वेदेषु पुराणेषु पुरातनैः ।
महर्षिभिर्महादेवो महनीयः प्रतिष्ठितः ॥
तथागस्त्यादिमुनयो दुर्वासो नंदिकेश्वरः ।
महाकालो दधीचिश्च पाणिनिश्च कणादकः ॥
स्कन्दोभृंगिरिटिर्वीरभद्रश्चप्रमथादयः ।
अजो हरिः सहस्राक्षो बाणासुरदशाननौ ॥
वासिष्ठश्चवाल्मीकि भारद्वाजात्रिगौतमाः ।
एते परमशैवाश्च भजंति परया मुदा ॥

प्रसादसेवनाध्यानादर्चनाद्धारणादपि ।
जाता दर्शनकर्तारः श्रावयन्ति जगत्त्रयम् ॥

शैवे धर्मसंहितायाम् ब्रह्माण्डपुराणे शिवसंहितायांञ्च व्यासजैमिनिसंवादे—

पाणिनिश्च कणादश्च कपिलो गौतमादयः ।
प्रसादसेवनाध्यानादर्चनाद्धारणादपि ॥
जाता दर्शनकर्तारः श्रावयन्ति जगत्त्रय-

मित्यादौ धारणादिति निर्देशेनैतर्लिङ्गधारणं कृतमितिस्पष्टं प्रतीयते ॥

एतावता प्रदर्शितऋग्वेदादिप्रमाणैर्लिंगधारणं तत्पूजां च यावज्जीवपर्यन्तंकर्तव्यताकत्वेन लिंगधारणं वेदादिसिद्धम् । तस्मात्परमपवित्रवीरशैवमतं वेदागमसम्मतमितिवैदिकत्वंचदृढमिति शिवम् ।

जयतु श्रीरामनाथ लिङ्गजातोजगद्गुरुः ।
एकोरामइति ख्यातः भक्तमंदारसुरद्रुमः ॥

अथ यजुर्वेदेऽपि लिङ्गधारणं कर्तव्यमितिप्रमाणबाहुल्यमस्ति । तथाच यजुर्वेदशतरुद्रीये—

या ते रुद्र शिवा तनूरघोरा ऽपापकाशिनी ।

तया नस्तनुवा शन्तमया गिरिशन्ताभि-
चाकशीहि ॥

हे रुद्र रुद्रं रोदनं संसारदुःखजनितरोदनं द्रावयती
ति रुद्रः। अथवा रुद्रमज्ञानं द्रावयतीति रुद्रः तत्सं
बुद्धौ हेरुद्र या ते तव "तनुः" लिङ्गरूपशरीरम्।
"अघोरा" नाम शान्ताकारा "शिवा" मंगलप्रदा
"श्वः श्रेयसं शिवं भद्रं कल्याणं मंगलं शुभ"
मिति कोशात्॥ सा तनुः प्रसिद्धरूपं त्वच्छरीरम्।
"अपापकाशिनी"। अपापेषु पापरहितभक्तेषु काशत
अनर्थनिकाशिनी प्रकाशत इत्यर्थः लिङ्गरूपशरीराव-
च्छिन्नः शिवः भक्तगात्रेषु धार्य इति यावत्।
अथवा हेरुद्र ते तव "शिवातनुः"। शिवा निर्दोषत्वेन
निरतिशयकल्याणगुणाकरत्वेन शिवङ्करत्वेन च
प्रसिद्धा या तनुः देहः। "लिंगंतु शिवयोर्देह"
इत्यागमोक्तत्वात्। शैवे वायवीयसंहितायामप्यु-
क्तत्वाच "लिङ्गं शिवा तनुः प्रोक्ता मूर्तिर्घोरा तनुः
स्मृते" तिपुराणवाक्याल्लिङ्गरूपिणी मूर्तिः। सा च
कीदृशीत्याकांक्षायाम्। "अघोरा" शिवयोगेन
सर्वहृदयङ्गमत्वादभयङ्करा। सौम्याकारेतियावत्।
पुनः कीदृशीत्याकांक्षायाम्। "अपापकाशिनी"।
दीक्षया दूरीकृतदुरिताः पापरहिता इतियावत्।

"सर्वैस्तपोभिः सकलैश्च योगैः पुण्यैरशेषैरपि सर्वयज्ञैः।
दानैः समस्तैरखिलैरुपास्यैर्मय्यर्पितैर्भक्तिरनंतजन्मभिः ॥ कोटिजन्मयुतैः पुण्यैर्मयि भक्तिः प्रजायते" ॥ इति

सनत्कुमारसंहिताशिवगीताभ्यां च–

"अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
प्रबुद्धानां विरक्तानां प्रसीदति महेश्वरः ॥
प्रसादादेव साभक्तिः प्रसादो भक्तिसम्भवः ।
यथैवाङ्कुरतो वीजं वीजतोवा यथाङ्कुरम्" ।

इत्याद्यागमवचनेभ्यश्च बहुजन्मकृतपुण्यैः प्रक्षीणपापपंजरा ये ते अत्र अपापा इति यावत् । पापरहितेषु तादृश भक्तेषु काशिनी इष्टप्राणभावलिंगरूपेण प्रकाशिनी शोभायमानेत्यर्थः । "गिरिशंत" गिरौ कैलासाद्रौ शम् । स्वोपासकानां निरतिशयानंदस्वरूपं सुखं तनोतीति गिरिशन्तः । सम्बुद्धौ हे गिरिशन्त । "शंतमया" सुखतमया "तया" लिंगरूपतन्वा तनुवा । नः अस्माकम् । संसारतापत्रयं प्रणुद्य अस्मदीयाहंगृहोपासनानुसारेण लिंगस्वरूपतया "अभिचाकशीहि" शोभसे । प्रकाशस्वे

न्वयः पूर्वश्रुतिवाक्यमवलम्ब्य भगवता शिवेन वातुलागमे नायमर्थ उक्तः वातुले-

अघोरा पापकाशिनी या ते रुद्र शिवातनूः ।
यजुषा गीयते यस्मात्तस्माच्छैवोऽघवर्जितः ॥
कायशुद्धिश्चात्मशुद्धिश्चाङ्गन्यासः करस्य च ।
सर्वशुद्धिर्भवेन्नित्यं लिङ्गधारणमेव च ॥

स्कन्दशिवपुराणयोः-

लिंगं तनुः शिवा प्रोक्ता मूर्तिर्घोरा तनुःस्मृता ।
अपापपुत्र भक्तेषु तयोर्मध्ये शिवातनुः ॥
काशते परमेशस्य शिष्टास्ते लिङ्गधारिणःइति ॥

शिवयोगप्रदीपिकायाम्-

नित्यं भाति त्वदीयेषु याते रुद्र शिवातनूः ।
अघोरा पापकाशीति श्रुतिराहसनातनी ॥इति ॥

कारणागमचतुर्वेदतात्पर्यसंग्रहौच तमेवार्थ-मनुवदतः—

अपापकाशीति वपुः श्रुतंते शिष्टः प्रसिद्धा भग-वन्नपापाः । अतस्त्वदीयानपहाय भक्तानन्यान

शिष्टानिति निश्चिनोमि ॥

एवं सिद्धान्तशिखामणौ–

अघोरा पापकाशिनी याते रुद्र शिवा तनूः ।
यजुषा गीयते यस्मात्तस्माच्छैवोऽघवर्जितः ॥
यो लिंगधारी नियतांतरात्मा नित्यं शिवाराधन
बद्धचित्तः । इत्यादीनि ॥

पुनश्च वातुले–

लिंगभक्तिर्लिंगपूजा लिंगधारणमेव च ।
लिङ्गप्रसादस्वीकारो लिङ्गश्रवणमादरात् ॥
लिंगध्यानं लिङ्गमनः सर्वं लिंगमयं जगत् ।
धारयेद्यस्तुहस्तेन लिंगाकारं शिवं सदा ॥
तस्य हस्तास्थितं विद्धि तत्पदं संपदां पदम् ।
यस्य सांसारिकोभावो नास्ति लज्यादयस्तथा ॥
सभक्तो निःशठो धन्यो लिङ्गं सर्वत्र धारयेत् ।
भूमौ प्रतिष्ठितं लिङ्गं पुनर्नोत्पाटयेद्यथा ।
देहे प्रतिष्ठितं लिङ्गमन्ते नोत्पाटयेत्तथा ॥
लिङ्गे प्राणे विनिक्षिप्ते लिङ्गिनं तं विनिक्षिपेत ।

विमुक्तः प्रत्यवायश्च जीवमाने यथातथा ॥
सकलं दुष्कलाग्राह्यमिष्टलिङ्गस्थलं महत् ।
इष्टावाप्तिकरं साक्षादनिष्टं परिहारकम् ॥
इष्टमूर्जं स्वभक्तानामनुयच्छति सर्वदा ।
इष्टलिङ्गमितिप्राह तस्मादाथर्वणी श्रुतिरिति ॥
शिवधर्मपुराणे–
लिङ्गधारी सदाशुद्धो निजलिङ्गं मनोहरम् ।
अर्चयेद्गन्धपुष्पाद्यैः करपीठे समाहितः ॥
तस्माल्लिंगाङ्गसम्बंधी नित्यनैमित्तिकाश्रयम् ।
संस्कृतं गुरुणा दत्तमिष्टलिंगमतन्द्रितः ॥
नित्यं स्ववामहस्ताब्जे सावधानेन पूजयेत् ।
लिंगं वामकरेस्थाप्य गोमुखं वामकं तथा ॥
दक्षिणे गोलकाकारमेतल्लिंगस्य पूजनम् ।
लिंगं वामकरे स्थाप्य अङ्गुष्ठाग्रेण गोमुखम् ॥
कनिष्ठानामिकाग्राह्यं शिवलिंगंतु संस्पृशेत् ।
करस्थलं गते लिंगे गोमुखे वामभागके ॥
अष्टविधार्चनं कुर्याद्वीरशैव इति स्मृतः ॥ इति ॥

एवमेवार्थः शिवरहस्येऽपि प्रतिपाद्यते-

शिवलिंगे शरीरस्थे शिवचिंतोपपद्यते ।
तच्छिवानुभवं प्रेप्सुः शिवलिंगंहि धारये दिति ॥

धारणानंतरन्तु-

यस्तुलिंगार्चनं त्यक्त्वा भुंक्ते विट्क्रिमिकीटभुक् ।
नरो नरकगामीस्यात् सर्वलोक वहिष्कृतः॥इति ॥

वातुलतन्त्रे कामिकागमलिङ्गधारणदीक्षापटलेच-

प्राणलिंगं करात्वङ्गे वीरशैवस्तु धारयेत् ।
चरलिंग इति ख्यातः पूज्यः पाशुपतैरपि ॥
उत्तमाङ्गे गले वापि कक्षे वक्षस्थलेऽपिवा ।
तथा हस्ततलेवापि प्राणलिंगं धरेत्सुधीः ॥
उत्तमाङ्गे गले कक्षे सर्वदा धारयेच्छिवम् ।
मूत्राद्युत्सर्जनेयाने भोजनेऽपि सदाशुचिः ॥
गच्छंस्तिष्ठन् स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि ।
शुचिर्वाप्यशुचिर्वापि लिंगं सर्वत्रधारयेत् ॥
नाभौच हृदयेमूर्ध्नि सर्वावस्थासु सर्वदा ।
श्रीलिंग धारणं कुर्याद्देवि नित्यं मम प्रियः ॥

नाभेरधोलिंगधारी पापमना च मयुज्यते ।
नाभ्यूर्ध्वेलिंगधारीच सौभाग्यज्ञानवर्धनः ॥
अपवर्गोस्तुरीशानं गले भक्तिपरायणः ।
ईश्वरेणाविनाभावसम्बंधं कर्तुमात्मनः ॥
मूर्ध्निवा धारयेल्लिंगं न कदाचिद्वियोजयेत ।
ईशानानित्यसंयोगानिजया परनिष्ठया ॥
वक्त्रेवा धारयेल्लिंगं मत्प्रभावाद्विभावयेत् ।
तस्मिन् सन्निहितेकिंचिन्नोच्छिष्टमितिनिश्चितम् ॥
अधमाधमयुक्तानां पापिनां चाभिचारिणाम् ।
यमलोकोनविद्येत सदावैलिंगधारिणाम् ॥
भक्तस्याऽविभ्रतो लिंगंयावत्प्राणस्यधारणम् ।
श्वमांसभक्षणं तावदनेन रचितं भवेत् ॥
दासीगोपालभृत्यानां गृहस्थः सुतयोपिताम् ।
लिंगंस्वाङ्गेनचेद्यस्य सर्वचाण्डाल उच्यते ॥
सतीसुतश्च भृत्यश्च दासीगोपस्तथैवच ।
सर्वेलिंगाङ्कितं श्रेष्ठमन्यच्चाण्डालवद्भवेत् ॥
प्राणेशं लिङ्गमाकल्य यो भुंक्ते लिंगवर्जितः ।

सस्वमांसंसरुधिरं सादरं भक्षको भवेत् ॥
असमर्प्य यदीशाय वस्तु किंचित्कदाचन ।
कथंचिन्नैव भुंजीत शिवभक्तिपरोनरः ॥
एतदाभिप्रायः शैवरत्नाकरोऽप्युक्तवान्–
लिङ्गधारणभक्तश्च लिङ्गवाह्य सतीसुतौ ।
चुम्बनाल्लिङ्गनंचैव रौरवं नरकं व्रजेदिति ॥
स्कान्दे–
लिंगार्चनरता नारी रजःसूतकसंयुता ।
रविरग्निर्यथा वायुस्तद्वत्कोटिगुणः शुचिः ॥
एषएवार्थो वातुलतन्त्रेणापिलभ्यते ॥ तत्रच–
यथाह्यग्निसमावेशान्नायो भवतिकेवलम् ।
तथैव ममसान्निध्यान्नतु भक्तोनिमानुषः । इति ।
श्रुतिसारभाष्येतु–
धारणाद्बहुजन्मकृतानि पापान्यचिरेण विनश्यन्ति पूजाव्रतमल्पूनं भवति । पूजानियमः सुलभोभवति सर्व समर्पितुं शक्यं भवतिशम्भुलिंगैक्यभावनया शम्भुरेवभवति । तस्माल्लिंगस्याधारणाद्धारणं परम् ॥ इति ।

श्रुतिरीरिति ॥

लिङ्गधारणं कर्तव्यमिति श्वेताश्वतरोपनिषदापि सिध्यति तथाचोपनिषदि—

**सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।**

**सर्वव्यापी च भगवान् तस्मात्सर्वगतःशिवःइति॥**

अस्यार्थस्तु वक्ष्यमाणरीत्या । सर्वेषां लिङ्ग धारणशरीरणानाम् । ' आननानि शिरांसि ग्रीवा अधिकरणं यस्यसः सर्वाननशिरोग्रीवः धार्यमाणःसन् । मुख मस्तक कण्ठादिष्विष्टलिङ्गरूपेण शिवो वर्तत इत्यर्थः । आननशिरोग्रीव इति प्राण्यङ्गत्वादेकवद्भावः ।

अत्र शिरोग्रीवमाधिकरणत्वेन यस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तो बोध्यः । बहुव्रीहिरिति नभ्रमितव्यमाधिकरणपदाभावात् । उत्तरपदलोपस्य च शाकपार्थिवादित्वतुल्ये प्रादिभ्यो धातुजस्य वा केवले विधानात् । 'सर्वभूतगुहाशयः' । सर्वेषां भूतानां प्राणिनाम् । गुहायां दहरपुंडरीके शेते अन्तर्लिङ्गरूपेणास्ते वर्ततइत्यर्थः । सर्वव्यापी सर्वत्र व्यापकः 'तस्मात्' तत्कारणात् 'भगवान्' षड्गुणैश्वर्यसम्पन्नः शिवः । ' सर्वगतः ' समस्तप्राणिषु इष्टादिभेदेन शरीर भेदेन च प्राप्तः।संबद्ध इति यावत् ।

तत्र कामिकाद्यागमेषु—

उत्तमांगे गले वापि कक्षेवक्षस्थले पिवा ।
तथाहस्ततले वापि शिवलिंगं धरेत्सुधी रिति ॥
मूर्ध्निवा कण्ठदेशेवा कक्षे वक्षस्थले पिवा ।
कुक्षौ हस्ततले वापि धारयेल्लिंगमैश्वरम् ॥
कृत्वा निर्वाहि सततं लिंगं वस्त्रेण वेष्टितम् ।
मस्तके कंधरे कुक्षौ वक्षस्यथ करस्थले ॥
उत्तमांगे गलेवापि कुक्षौ वक्षस्थले पिवा ।
तथा हस्ततले वापि प्राणलिंगं धरेत्सुधी—

रित्यादि स्कांद शंकर संहितासिद्धान्तशिखा-मण्यादि ग्रन्थवचनैर्मस्तकग्रीवादिषु लिंगधारणं प्रतिपादितम् । तथालोके व्यवहारोऽपि दृश्यते । आनने धारणन्त्वनुक्तत्वादप्रसिद्धम् । तथा च " स वोनन शिरोग्रीव" इत्यत्राननपदं वैयर्थ्यमितिवाच्य-म् . वक्ष्यमाण रीत्या सार्थकमेव भवति । तथाच ॥

मननात्त्रायते यस्मात्तस्मान्मन्त्रोऽयमीरितः ।
वाच्यवाचकरूपेण द्विधा मन्त्रः प्रकीर्तितः ॥
वाचको वर्णरूपः स्याद्वाच्यश्च परमः शिवः ।

मनुदेवतयोरैक्यं तस्मादाहुर्महर्षयः ॥ इति
व्यासनिरुक्त्या । अपिच ।

आदिप्रणवपीठं स्यादकारो मध्यमेव च ।
उकारो गोमुखंचैव मकारो वर्तुलं तथा ॥
नाले बिंदुर्महातेजो नादश्चाखण्डलिंगकम् ।
नकारश्चादिपीठंच मकारो मध्यमेवच ।
शिकारोवर्तुलंचैव वकारो गोमुखं तथा ।
यकारो बिंदुरेवस्यात्प्रणवो लिंगमुच्यते ॥
नमेतिपीठसंयुक्ते शिकारो मध्यमेवच ।
वकारो गोमुखंचैव यकारो वर्तुलं तथा ॥
ओङ्कारो गोलकस्थानं लिंगं षड्वर्णरूपकम् इति ॥
वातुलवचनेनच । एवं-

नमः पीठमिति प्रोक्तं शिकारं मध्यमीरितम् ।
वकारं गोमुखं वृत्तं यकारं गोलकं स्मृतम् ॥
ओङ्कारं लिंगमाख्यातं षड्वर्णं लिंगमुच्यते ॥
इति सिद्धान्तसारावलीनम् ॥

एवंच प्रदर्शितनतद्वचनैः पंचाक्षरीमन्त्रलिंग-

योरैक्येन आननं मन्त्ररूपेण शरीरं लिङ्गरूपेण स्थित इति वक्तुं शक्यत्वादेतएव

वक्त्रेवा धारयेन्नित्यं मत्प्रभावं विभावये दिति ॥

शिवराघवसंवादोक्तं मङ्गलम् । एतावताऽनने मन्त्ररूपेण धारणमितिसिद्धम् ॥ एवं नारायणोपनिषदापि लिङ्गधारणं सिध्यति । तथाच नारायणोपनिषत्सप्तमानुवाके–

नमो ब्रह्मणे धारणं मेऽस्त्वनिराकरणं धारयिता भूयासम् । कर्णयोः श्रुतं माच्योढ्वम् ममामुष्य ओमिति ॥ प्रार्थनामन्त्रमिदम् ।

अस्यमन्त्रस्यायमर्थः । "ओं" ओङ्कारस्वरूपाय ' ब्रह्मणे ' शिवायनमः । 'धारणम्' । साकांक्षितपदोऽत्र धारणशब्दोऽतएव तत्पदमध्याहर्तव्यम् । तथाच तच्छिवलिङ्गधारणमितियावत् । 'अनिराकरणम्' । अविभज्यमानसम्बन्धं यथाभवति तथा ' अस्तु ' भवतु । अर्थाल्लिङ्गधारणवियोगोमाभूदित्यर्थः । ' धारयिता ' धारणविशिष्टः ' भूयासम् ' नाम भवेयम् । ' अमुष्य ' ' मे ' लिङ्गधारणविशिष्टस्य ' मे ' मम । ' कर्णयोः श्रुतम् । श्रवणपूर्वकलिङ्गाङ्गसामरस्यम् । अथवा पंचा-

शिरस्यङ्कशिरमन्त्रश्रवणं वा । कर्णे मन्त्रोपदेशस्य युक्तत्वात् माध्याख्यस्य माध्यवत् । विस्मरणं तस्यादिनियामकम् । 'माध्यो ऽहमस्मि' 'पाठयतु' अमुष्य ब्रह्मणः शिवस्य ओङ्कारवाच्यस्य तस्येदमिति । 'मम' आत्मनः । मामेवेत्यर्थः । माध्वी तथा सात्त्विका तत्त्वा उद्भवम् ब्रह्मणिवत् प्राप्तं दोन्यं प्राकृतलिङ्गनिवृत्त्यर्थः ।

'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोमिति' ।

'नमस्ताराय नमः' इत्यादिश्रुतिषु अथच 'सर्वज्ञाय नमस्तुभ्यमोङ्काराय नमो नमः इति' अपिचैवमेव ओङ्कारान्ताय सूक्ष्माय सर्वाङ्गुष्ठायात्मरूपिणे । ओजस्विनं विकर्तारं कर्तारं प्रणवात्मकम् ॥ 'अकाराय नमस्तुभ्यं उकाराय नमो नमः मकारायार्धमात्राय मात्रातीताय ते नमः' इत्यादि वचनैर्लिङ्गायादिषु शिवस्योङ्कारपदवाच्यत्वं सत्यगुप्तादिनमनवोङ्कारस्वरूपाय ब्रह्मणे ओङ्कारवाच्यं साकारलिङ्गमित्युक्तमित्यलं पल्लवितेन ॥ एतदुपनिषन्मन्त्रस्वरूपमनुस्मृत्य स्कान्दे भगवता बादरायणेनेत्युक्तम्—

ओमिति ब्रह्म परमं लिङ्गाकारं महेश्वरम् ।
सर्वावस्थासु सर्वेषु कालेषु निमिषार्धतः ॥

अवियोगेन भुक्तिंच मुक्तिमिच्छन् द्विजोत्तम ।
धारयेत्पंचसु स्थानेष्वस्मिन् मल्लग्नमानसः ॥
उपदिष्टंच गुरुणा कर्णे तद्दिव्यरूपभाक् ।
वेदसिद्धं मन्त्रराजं पंचाक्षरं जपेत्सदेति ॥
एवं ब्रह्माण्डपुराणेपि प्रतिपादितवन्तः-
नमोऽस्तु ब्रह्मणे तुभ्यमाचार्याय महात्मने ।
तन्निराकरणं विश्वं जन्यत्वान्मृत्युनैवहि ॥
अनिराकरणंब्रह्म कारणत्वाच्चिरंतनम् ।
अनिराकरणं मेऽस्तु धारणं देशिकोत्तम ॥
वेदशास्त्रपुराणेषु प्रसिद्धं कर्णयोः श्रुतम् ।
अहं धारयिता देवं भूयासं सर्वकारणम् ॥
ब्रह्मविष्ण्वादयो देवाः प्रसिद्धाश्च तथाश्रुताः ।
ते निराकरणाः सर्वे मृत्युना सर्वशत्रुणा ॥
मे निराकरणास्त्वेते नहिधार्याः कदाचन ।
नहि धारयिता देवान् भयसं मज्जतः सुरान् ॥
नशक्नुवन्ति मां तर्तुं मज्जनं मृत्युसागरे ।
ऊर्ध्वं ममेदमौलिंगं मां चामुष्य समाश्रय ॥ इति ॥
भद्रं भूयात् ।

श्रीजगद्गुरु मल्लाराध्यो विजयतु ।

जीयाच्छ्रीसिद्धलिंगाख्यःशिवाचार्यो जगद्गुरुः।
सद्धर्मपीठमध्यास्ते शिष्यहृद्ध्वान्त भास्करः ॥

अथाथर्वणवेदानुसारेणापि लिङ्गधारणाविधिराख्यते तथाचाथर्वणवेदे-

चतुर्वेदा लिंगं धारयन्ति अनन्ता वै वेदा लिंगं धारयन्ति । त्रयो वेदा लिंगं धारयन्ति । ऋषयः शिवलिंगं धारयंति । अजहरयः शिवलिंगं धारयंति सुरेन्द्रा दैत्याः शिवलिंगं धारयंति । तस्माद्देवाः शिवलिंगं धारयन्ती ति ॥

एतच्छ्रुतिवाक्यमवलम्ब्याशिवराघवसंवादे-

गच्छन्तिष्ठन्स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि ।
शुचिर्वाप्यशुचिर्वापि लिंगं सर्वत्र धारयेत् ॥
सर्वेषां शिवचिह्नानां शिवलिंगं प्रशस्यते ।
तस्मात्तदेव धार्यंहि पूजनीयं विशेषतः ॥
नाभौच हृदये मूर्ध्नि सर्वावस्थासु सर्वदा ।
श्रीलिंगधारणं कुर्याद्देवि नित्यं ममाप्रियः ॥

धारयेद्यस्तु हस्तेन लिंगाकारं शिवं सदा ।
मस्तके धारयेच्छिष्यो ब्रह्माद्यैर्मस्तके धृतम् ॥
विन्यसेन्मुकुटस्यान्ते धारणं शुभमुच्यते ।
नाभेरधस्तात्सततं प्रमादान्नैव धारयेत् ॥
कदाचिद्धारयेद्यस्तु पापात्मेति स उच्यते ।
नाभेरूर्ध्वं लिंगधारी ज्ञानसौभाग्यवर्धनः ॥
कण्ठेषु हरकंठादिमुनयो मनवस्तथा ।
सर्वदा शिवलिंगंतु धारयन्त्यर्च्चयन्तिचेति ॥

अथर्वशिर उपनिषदिनु—

रुद्रमेकत्वमाह रुद्रं शाश्वतं वै पुराणमिष्टमूर्जं तप्य-
मानुयच्छते ।

इत्येतदुपनिषद्वाक्यानुसारेण वातुले—

इष्टमूर्जं स्वभक्तानामनुयच्छति सर्वदा ।
इष्टलिङ्गमितिप्राह तस्मादाथर्वणी श्रुतिरिति ॥

पारमेश्वरतन्त्रे दीक्षाप्रकरणेच—

मोक्षार्थिनः शिखादेशे बाहुमध्येतु धर्मिणः ।

कामार्थिनः कर्टदेशे कण्ठे सर्वार्थिनः प्रिये ॥
अष्टोत्तरशतं जप्त्वा मम मूलमहामनुम् ।
आबध्नीत गुरुर्लिंगं देहे शिष्यस्य यत्नतः ॥
न पैशुन्यं न मात्सर्यं नद्रोहं नापि पीडनम् ।
नस्पृशेदशुभं क्वापि प्राणैःकण्ठगतैरपि ॥
ब्रह्माविष्णुस्तथा शक्रलोकपालाश्च देवताः ॥
धारयन्त्यालिकाग्रेषु शिवलिंगमहर्निशम् ॥इति॥

लिङ्गपुराणेऽपि—

संयोजनीयं गुरुणा पूर्वोक्तेन च वर्त्मना ।
तनुत्रयगतानादिमलत्रयमसौ गुरुः ॥
दीक्षात्रयेण निर्दग्ध्वा लिंगत्रयमुपादिशेत् ।
लिंगन्तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मंतु कारणम् ॥
धारयंतो नराःस्थूलं कारणं सम्श्रयंति हि ।
कुर्यात्त्रिपुटिसंधानलक्षणं शिवयोगिनाम् ॥
स्थूललिंगस्य देहस्य सूक्ष्मस्य मनसस्तथा ।
कारणस्यात्मनो नित्यं कुर्यादैक्यमतान्द्रितः ॥
अनेन धारयेल्लिंगं ध्यायेच्चिन्तेन शङ्करम् ।

स्वात्मना भावयत्पूर्णमैक्यभावेन सर्वतः ।
एतत्त्रिपुटिसंधानलक्षणं परिकीर्तितम् ॥
कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् ॥
मानवःशिवयोगेन शिवो भवति निश्चयम् ।
अनेन वर्त्मना गच्छन् सजीवन्नेवशङ्करः ॥
इत्यादीनि ॥

सिद्धान्तशिखामणौ–

ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः ।
धारयंति सदालिंगमुत्तमांगे विशेषतः ॥
लक्ष्म्यादिशक्तयः सर्वाः शिवभक्तिविभाविताः ॥
धारयंत्यलिकोग्रेषु शिवलिंगमहर्निशम् ।
वेदशास्त्रपुराणेषु कामिकाद्यागमेषुच ।
लिंगधारणमाख्यातं वीरशैवस्य निश्चयादिति ॥

अपिच थर्वशिरस्युत्तरत्र–

प्राणेष्वंतर्मनसो लिंगमाहुर्यस्मिन् क्रोधो याच तृष्णा क्षमाच । तृष्णां छित्वा हेतुजालस्य मूलम् । बुध्द्या संचिन्त्य स्थापयित्वातु रुद्रे रुद्र एकत्वमाहुः

इति ॥ अस्यार्थः । 'प्राणेषु' पंचप्राणेषु अन्तर्गतम् अन्तर्हृदयस्य 'लिङ्गमाहुः' प्राणलिङ्गमिति ज्ञानिनः आहुः कथयन्तीत्यर्थः । 'यस्मिन्' सूक्ष्मशरीरे । 'क्रोधः' कोपः 'तृष्णा' आशा च स्तेन । साच 'हेतुजातस्य सूत्रम्' । संसारहेतुजातस्य तृष्णैव सूत्रमिति यावत् ॥ अतिविष्णुब्रह्मादिस्थावरान्तानां तृष्णां छित्वा वैराग्येण छेदयित्वा । 'पुष्पाणि संचिन्त्य' तत्स्मरणं ध्यात्वा । स्थापयित्वा तुष्टे इति ॥

"लिङ्गे प्राणं समाधाय प्राणे लिङ्गन्तु शाम्भवम् । स्वशरीरं मनः कृत्वा नान्यं किञ्चिदपि चिन्तयेत् ॥ साध्यन्तरा भक्तिरिति प्रोच्यते शिवयोगिभिः" । इति शङ्करसंहितावचनात् । अपि च तत्रैव " पीठस्थे शिवलिङ्गेतु शिष्यप्राणं निधाय च । लिङ्गं संस्थाप्य तत्प्राणे प्राणलिङ्गं भवेत्ततः "इत्युक्तम् ।

" शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् । तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः " इति सिद्धान्तशिखामणिवचनात् ॥

" देहे प्राणं समायोज्य प्राणलिङ्गं प्रकल्पयेत् । अविनाभावसंयोगात्तस्मादुभयं प्रकल्पयेत् " इति शुद्धाख्य तन्त्रवाक्याच्च प्राणरूपं सूक्ष्मशरीरम् । रुद्रे रुद्रात्मके लिङ्गे स्थापयित्वा संस्थाप्य रुद्रे लिङ्गस्वरू-

ये परशिवे । 'एकत्वम्'—

"रुद्रो भूत्वा यजेद्रुद्रं नारुद्रो रुद्रमर्चयेत् । प्राण लि-ङ्गाङ्गसम्बन्धी सरुद्रो नात्रसंशयः ।" इतिवच्च नादैकत्वं नाम सामरस्यं लिङ्गेन नित्यसम्बन्धत्व-मिति यावत् ।

अपिचोत्तरत्र—

रौद्रंशाश्वतं वै पुराणं इष्टमूर्जं तपसानुयच्छति व्र-तमेतत्पाशुपतं रुद्रात्मकं लिङ्गं नित्यं धारयामिति

इष्टलिङ्गमिदं साक्षादनिष्टपरिहारकम् ।

धारयेदवधानेन शरीरे सर्वदा बुधः ॥

एतदर्थं वातुलागमे तन्त्रोत्तरमहापाद्ये—

प्राणलिङ्गं मनोग्राह्यं भवेत्सकलनिष्कलम् ।

तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुरिति श्रुतिः ॥

सकलं हस्कलाग्राह्यमिष्टलिङ्गस्थलं महत् ।

इष्टसिद्धिकरं शाश्वदनिष्टपरिहारकम् ॥

इष्टिः पूजा यया नित्यमिष्टं पूजितमादरात् ।

इष्टलिङ्गमिति प्रोक्तमाचार्यैर्लिङ्गपूजकैः ॥

इष्टमूर्जं तपसाप्यनुयच्छति यद्यतः ।

तदिष्टलिङ्गमित्याहुस्तस्मादाथर्वणी श्रुति रिति पुरातनगीतामुच्च–

" अङ्गे सर्वामूर्तं मवाङ्गयः शिवलिङ्गं धारयेत सततं लिङ्गं तद्वन्तर्धेद्वणामिति श्रुतितः " इति ॥ पुरातनवचनाच्च अथर्वशिरसि वीरशैवानां लिङ्गधा-रणं स्पष्टमुक्तमस्त्यत्र । वातुले अनुभवसूत्रे च–

भावलिङ्गं परंतत्त्वं प्राणलिङ्गन्तु सूक्ष्मकम् ।
इष्टलिंगं भवेत्स्थूलमेवं लिङ्गत्रयं स्मृतम् ॥
स्थूलं बाह्यमिति प्रोक्तं सूक्ष्ममाभ्यन्तरं स्मृतम् ।
सबाह्याभ्यन्तरं यत तत्परमित्यभिधीयते ॥
इष्टलिङ्गन्तु बाह्याङ्गे प्राणलिङ्गं तथान्तरे ।
भावलिङ्गं तथैवास्मिन्नात्माङ्गे सुप्रतिष्ठितं ॥ इति ।

एवं लिंगधारणविषये अर्थाल्लिंगधारणं कर्तव्यमिति विषय इति यावत् ॥ वेदागमादिवत तदर्थप्रतिपादकस्मृतयोऽपि बहवः सन्ति । तथाच गौतमस्मृतौ–

मुखे मंत्रो हृदि ध्यानं मस्तके लिंगधारणम् ।
रुद्राक्षंच शिखा भस्म इति ब्राह्मणलक्षणमिति ॥

उभयत्र हृदिध्यानमिति पदेन आभ्यन्तरलिंगानुस-

न्धानं प्रदर्शितम् । मस्तके इति पदेन बाह्यालिंगधारणं स्पष्टमेव ॥

नन्वत्र ब्राह्मणमात्रोद्देशेन मन्त्रध्यानलिङ्गधारणादिपड्विधधर्ममुक्तम् । तच्चाचारविरुद्धं—कुतः केषुचिल्लिङ्गधारणभस्मधारणभस्माभावात् । केषुचिल्लिंगधारणमात्राभावादिति चेन्न ॥

"मृताहं समतिक्रम्य चाण्डालः कोटिजन्मसु" ।

इति ब्राह्मणमात्रोद्देशेन मृतिदिनश्राद्धातिक्रमे दोषविधायकवाक्यस्यैकादश्यादि व्रतप्रधानकानन्दतीर्थीयमतानुयायिव्यतिरिक्तविषयवत् । आनन्दतीर्थीयैरेकादश्यां श्राद्धमासौ व्रतभंगभिया श्राद्धं नक्रियते । तदा तन्निषेधवाक्यानां वैष्णवग्रन्थेषूपलभ्यमानानामनुरोधेनश्राद्धातिक्रमबोधकवाक्यएकादशीमृतस्य पितुः पुत्रेभ्यो वैष्णवविशेषेभ्योऽतिरिक्तत्वेन यथा संकोचस्तथा ॥

पुनश्चैवं ।

रात्रिः शिवा काचन सन्निधत्ते विलोचने जागृतमप्रमत्ते । समानधर्मा युवयोः सकाशे सखा भविष्यत्यचिरेण कश्चिदिति ॥

सकलजनलोचनोद्देशेन जागरणविधायक वाक्यस्य

गमानुगमनानुपपत्तिर्व्यक्तिर्व्यतिरेकयन्यत्तच्च । अन्यत्र लिंगधारित्वियपरत्वात् किंच मत्स्तके लिंगधारणमिति विशेषपर्यवसायिपदसत्त्वेन सामान्य परस्यापि ब्राह्मणपदस्य लिंगांगिब्राह्मणरूप विशेषपर्यवसानाच्च । तच्चैवमपि लिङ्गांगिब्राह्मणोद्देशेन मन्त्रध्यानादि षड्विधधर्मसमूहस्य लक्षणकरणे तादृशलक्षणं क्षत्रियादावपि मन्त्राव्याप्तिप्रसक्तमिति वाक्यम् । ब्राह्मणलक्षणमिति वाक्यानुरोधेन अध्ययनाऽध्यापन—यजनयाजनादि षट्कर्मवत्त्वे ब्राह्मणत्वे सति च षड्विधधर्मवत्त्वं लिंगांगिब्राह्मणानां अर्थात्शैवब्राह्मणानां लक्षणमिति तात्पर्यावसायादित्यावत ॥ एतत्स्मृतावेव ॥

अक्षपादादयः सर्वे शक्तयः परया मुदा ।
धारयन्त्यलिकाग्रेषु शिवलिंगमहर्निशं इत्युक्तम् ॥

अपिच मनुस्मृतौ स्मृतिकारेण तावदेवं प्रतिपादितम्

सर्वकर्मविमुक्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं न च पिण्डोदकक्रिया इति ॥

अत्र समुच्चयद्योतकचकारसत्त्वेन ध्यानयोगरतसर्वकर्म विमुक्तयोः प्राधान्येनोद्देश्यत्वात् कोऽसौ ध्यानयोगरत इत्याकांक्षायाम्

शिवध्यानरतो भूत्वा शिवलिंगांगसंयुतः ।
शिवेतरपरित्यागी ध्यानयोगी सउच्यते ॥
यथा बाह्ये शिवं ध्यात्वा पूजां कुर्वन्ति मानवाः ।
तथा हृदि प्रसन्नश्चेध्यानयोगी स उच्यते इति ॥

तत्रैवोक्तत्वेन सर्वकर्मविमुक्तपदोपस्थाप्य यतीश्वरं । ध्यानयोगिपदोपस्थाप्य लिंगधारिणं चोद्दिश्य दहनाभावादिविधानेन लिंगधारणसिद्धिः ॥

एवं शातातपस्मृतौ–

वानप्रस्थं योगिनं चलिङ्गैक्यं भिक्षुकं यतिम् ।
तुर्याश्रमाणां मध्येच रसायां निक्षिपेन्मृतमिति ॥

अत्रालिङ्गधारिणमुद्दिश्य खननविधिनातुर्दशस्य विशेषणत्वेन लिंगधारणसिद्धिश्च प्रकरणप्राप्तप्रसंगवशात् प्रदर्श्यते और्ध्वदैहिकं कर्म। वीरशैवानां शरीरविसर्जनोत्तरं ( त्यागानंतरं ) दहनविधिर्नास्ति कुतः प्रथमं वेधादिर्दीक्षात्रयेण पवित्रीकृतमन्दिररूपशरीरत्रये नाम स्थूलसूक्ष्मकारणात्मकत्यागभोगयोगांगत्रये इष्टप्राणभावलिंगत्रयं प्रतिष्ठापयन्त्याचार्याः । यथामन्दिरादिषु प्रतिष्ठापितलिंगादीनामुत्पाटने महान्दोषस्तथा मन्दिररूपशरीरे लिंगंच दहनेऽतीवमहान्दोषः ॥ अतःस्कान्दे–

मृतलिंगांगिनो देहमज्ञानाद्दहते यदि ।
शिवालयसहस्राणां दाहदोषमवाप्नुयात् ॥इति॥
पूर्ववीरागमे—
कोटिशैवालयं दग्धं शिवभक्तं दहेद्यदि ।
देहमज्ञानयोगेन ब्रह्महत्यामवाप्नुयात् ॥
लिङ्गदेहिशरीरस्य लिङ्गसंस्कारवर्जितः ।
कुर्याच्चेद्दाहसंस्कारमुभयोर्नरके क्षयः ॥
यः प्राणलिङ्गनिक्षिप्तो निक्षिपेत्तत्तु लिङ्गिनम् ॥
तद्देहदहनाद्घोरं रौरवं नरकं व्रजेदिति ॥

अथच पंचतत्त्वनिर्मितशरीरस्य पांचभौतिकदेहस्येति यावत् ॥ कालपरिपाकवशात् पंचत्वप्राप्तौ पंचभूतेष्वेकीकरणमुचितम् । तथाच तत्र वाय्वाकाशयोरप्रत्यक्षत्वेन मर्दनं नाम व्यवहारयोग्यं न भवतीति जगति पृथिव्यप्तेजस्स्वेव संयुज्यते । वीरशैवैस्तु सर्वाधारपृथिवीति अग्निजलयोरपि पृथिव्याधारकत्वेन सर्वाधारपृथिव्यामेव निक्षिप्य तत्त्वसंयोजनं क्रियते । अतएव पाराशरस्मृतावेवमुक्तम्—

शरीरं पंचतत्त्वाख्यं तत्त्वं तत्त्वेन योजयेत् ।
तत्राऽपि पृथिवीतत्त्वे योजनं मोक्षसाधनमिति ॥

अपिच वीरशैवब्राह्मणातिरिक्त ब्राह्मणादीनां दहने ऽपि शेषस्याऽस्थ्याद्यंगस्य

' पृथिवींगच्छ " इतिमन्त्रेण पृथिव्यां गंगाम्भसिवा निक्षिप्यते किलान्यैरलिंगधारिभिः। तदपेक्षया पृथिव्यां निक्षेपमेव सर्वोत्कृष्टमिति वीरशैवैः खननविधिरवांगीकृतः ॥ तदुक्तं कूर्मपुराणे-

दग्धेऽपिदेहे पुनरंगशेषो निक्षिप्यते ऽसौ भुवेवा जले वा । तस्माच्च निक्षेपविधिर्बलीयान्निःशेषभावादपुनर्विधानादिति ॥

सदानन्दोपनिषदितु-

"शैलं लिंगमुरस्थले धार्यं विप्रेण" इत्यादिना लिंगधारणं विधाय खननमपि विहितम् ।

"शिवातनूरचित्ताद्बिले निक्षिपेदिति" शिवाः लिंगरूपशिवसम्बन्धिन्यो यास्तनवस्ताः तनूः अचित्तात् मरणादूर्ध्वं 'बिलं' निक्षिपेत् खनन क्रियां कुर्यादितियावत् ॥ उपनिषदन्तरेऽपि-

"सयावज्जीवो म्रियते अथैनमवनये हरन्तीति"

एवंस्थितेऽपि लिंगधारिणां देहदहने वातुलशिवधर्म-

शास्त्रादिचवर्नविरोधापत्तिमन्यान्नदृश्यते ।

तथाचवातुले-

शरीरं पार्थिवं बाह्यं लिङ्गं यन्नाछिपार्थिवम् ।
उभयंपार्थिवं यस्माद्रोप्यं रन्धेतुपार्थिव ॥
भूमौ विनिक्षिपेद्देहं भक्तानां शिवयोगिनाम् ।
अज्ञात्वा दहनं कुर्यान्नरकं वाधिगच्छति ॥
नरशरं देहद्धीमान शिवभक्तस्य कस्यचित् ।
प्रेताशौचं परोक्षत्र वर्जयेन्मुनिसत्तम ॥
शिवभक्तो मृतोयस्तु दहनादिर्नविद्यते ।
दग्धस्य दहनं नास्ति पक्वस्य पचनं नहि ॥
ज्ञानाग्निदग्धदेहानां नचदाहो नचक्रिया ।

इत्यादिशिवधर्मशास्त्रवचनानांच वीरशैवानां दहन-प्रतिषेधकशास्त्राणि बहूनि सन्ति । अपिच खननं विहाय दहनकरणात् प्रत्यवायश्च विधीयते शास्त्रकारैः। तथाचसदानन्दोपनिषदि-

शिवलिङ्गधरं विप्रं विपन्नंतु न दाहयेत् ।
यदिवा दाहयेत्तस्य ब्रह्महत्या तदा भवेत् ॥इति॥

पद्मपुराणे—

सर्वाश्रमातिरिक्तेण भवेदत्याश्रमी द्विजः । लिंगांगी यदिवामुक्तो दग्धुं नार्हति कर्मणा ॥

वायवीयसंहितायाम्—

षडध्वशुद्धिविधिवत् प्राप्तो वा म्रियते यदि ।
पशूनामिव तस्येह न कुर्यादौर्ध्वदेहिकमिति ॥

शिवधर्मशास्त्रेतु—

यः प्राणलिङ्गसल्लग्नो लिङ्गप्राणी वियुज्यते ।
शरीरदहनात्तस्य नरके कालमक्षयम् ॥
भस्मोद्धूलितसर्वाङ्गमापादतलमस्तकम् ।
रोम रोम भवेल्लिङ्गंतद्देहं दाहवार्जितम् ॥
योगाग्निप्लुष्टकायस्य त्वात्मलिङ्गेष्टलिङ्गयोः ।
संयोगान्मोक्षकालेतु मुमुक्षोः सा तनूः शिवा ॥
यदङ्गन्तु मृतं दृष्टं निक्षिपेत्तन्तु लिङ्गिनः ।
तद्देहदहनाद्घोरं रौरवं नरकं व्रजेत् ॥
प्राणलिङ्गवतां पुंसां लिङ्गप्राणवतां तनोः ।
प्राप्ते मरणकालेतु नकुर्याद्दहनं बुधः ॥

अज्ञानाद्दहनं कृत्वा नरकं चाधिगच्छति ॥इति॥

एवं शिवरहस्यसप्तषष्ठ्यध्याये नन्दिवचनम्—

रुद्ररूपः शिवज्ञानी सर्वांगे लिङ्गसंगिनः ।

कर्ममन्त्रेण दहनान्नरकः कालमक्षयम् ॥

लिङ्गं भूतिं च रुद्राक्षं ये देहे धारयन्ति च ।

सर्वाङ्गलिङ्गसंयुक्तंतद्देहं शिवमुच्यते ॥

तद्देहं दहते कर्मी नरकः कालमक्षयामिति ॥

ऋग्वेदे—

कर्दमेन प्रजा भूता मयि सम्भव कर्दमेति—

मन्त्रेण च एतद्वचनबलस्य—

मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।

मृत्तिके ब्रह्म दत्तासि काश्यपेनाभिमन्त्रिता ॥

मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ।

मृत्तिके प्रतिष्ठितं सर्वं तन्मे निर्णुद मृत्तिके ॥

त्वया हतेनपापेन गच्छामि परमांगतिम् ।

इत्याद्यनुवाकैः ॥

मही देवीं विष्णुपत्नीमजूर्यां प्रतीचीमेनां हविषा यजाम

इत्यादि नक्षत्रेष्टिपठितमन्त्रान्तरैरपि खननविधिः सिध्यति ॥
न च प्रदर्शितप्रमाणादिभिः सर्वत्र पिधानविधाने दहनविधायकपितृमन्त्रादि पठितश्रुत्यादीनां कागति स्तेषां नैरर्थ्यकापत्तिरिति वाच्यम् ॥ खननविधि छागपशुन्यायेन लिङ्गाङ्गि ब्राह्मणादि विषयकमित्य-ङ्गीकृत्य दहनविधायकवाक्यानां तदतिरिक्तब्राह्मणा-दिविषयत्वेन निःसंकोचकरणे बाधकाभावात् । एवं-व्यवस्थाकरणेन सार्थका भवन्ति । व्यवस्थयासार्थकं भवतु । किन्तु खननविधेर्यतिविषयकत्वमिति स्वी-क्रियते किलान्यैः । तथोदाहृतप्रमाणबोधितखननस्य यतिविषयकत्वमिति वक्तुंनशक्यते । कुतः । सर्वत्र शरीरमित्यादौ यतिवाचकपदाभावात् । खनना-चारानुरोधेनोभयसाधारण्येन खननविधायकश्रुतीनां संकोचासहिष्णुत्वात् । अपिचोदाहृतश्रुत्यागमादौ लिंगांगिब्राह्मणबोधकपदसत्वाचेत्यलम्पल्लवितेन ॥
एतावता प्रदर्शितश्रुतित्रयागमोपनिषत्पुराणादिकद-म्बेन लिङ्गधारणपूजयोः स्त्रीबालसाधारण्येन या-वज्जीवभावित्वमभिहितं धारणंपूजांच कर्तव्यमिति

वीरशैवस्थितानां च स्त्रीणां गर्भाष्टमे गुरुः ।
पंचसूत्रकृतं लिंङ्गं धारयेद्विधिवच्छुभमिति ॥

गर्भाष्टममासएव लिङ्गधारणं कर्तव्यमित्युद्घोषितिशास्त्रे बालानामपि धारणाविषये किमुत। अर्थादण्डापूपकन्यायेनैतत्सिद्धम्॥यथा विवाहे ब्राह्मणभोजनादि महोत्सवकार्ये महानन्नराशिर्वर्तते किल तत्रोच्छिष्टपुलकैकं पातयेच्चेत्तदा तद्राशिरप्युच्छिष्टो जायते तथा बालानां लिङ्गधारणामेव तत्संस्कारेण वयमपि भ्रष्टाःस्याम इत्यालोच्य गर्भस्यैव धारणं प्रतिपादितमेतावता लिङ्गधारणं वेदागमादिसिद्धं बाढं निश्चितम् वीरशैवशास्त्रविचारलेशं विना तन्मतव्यवस्थादिज्ञानाभावेन च तच्छास्त्रज्ञानलवदुर्विदग्धा अल्पधियः केचित् वीरशैवा अवैदिका लिङ्गाङ्कित इत्याद्यसम्बद्धमपलपन्ति वृकन्तिच। प्रदर्शितप्रमाणैर्वीरशैवानामेव वैदिकत्वं सम्भवति। तत्तन्मतानुगतत्तच्छास्त्रज्ञानोपलब्धौ यत्नः कर्तव्यः। यतो विशालाच पृथिवी सप्तद्वीपा वसुन्धरेतियावत् अतः तत्तद्देशानप्रतिगत्वा तत्तद्देशीयानामाचारव्यवहारादीन् द्रष्टव्यम्। तत्तदाचार्यसम्प्रदायंच ज्ञातव्यम्। तथापि तत्तच्छास्त्रज्ञानोपलब्धौ महानयत्नः कर्तव्यः। कुतः। चत्वारोवेदाः। साङ्गाः सरहस्याः बहुधाभिन्नाः। एकशतमध्वर्युशाखाः। सहस्रवर्त्मा सामवेदः। एकविंशतिधा ऋग्वेदः नवधाअथर्वणो

वेदः । अष्टाविंशत्यागमाः । अष्टादशपुराणानि । उपपुराणानिच इतिहासः एतत्तुपरियुक्तिप्रयुक्तिरूपग्रन्थाः एवं बहुधा भिन्नास्तत्तन्मतप्रतिपादकतत्तच्छास्त्रग्रन्थाश्चानेके सन्ति । एतावन्तं तत्तच्छास्त्रविषयमज्ञात्वा अनुनिशम्यच तत्तद्देशान्प्रत्यगत्वा तत्तदाचार्यसाम्प्रदायमविदित्वाच सहसावदतां वचनं केवलं साहसमात्रमेव । विश्वगुणादर्शे 'वीरशैवा अवैदिका' इत्यादिवीरशैवशास्त्राऽविचारेण कुबुद्ध्याच चम्पूकारेण भणितम् । अथवा ग्रन्थकर्तुर्नदोष इति मन्ये । यतः प्रश्नोत्तररूपेण निन्दास्तुतिपरत्वेनच ग्रन्थं रचयामास ग्रन्थकारः । यवनान् (तुरुष्कानपि) निन्दास्तुतिपरत्वेनवर्णितवान् । एवं च परमपवित्रवेदागमोपनिषत्पुराणसम्मतवैदिकवीरशैवमतं नोपवर्णितमिति न । ग्रन्थकर्तात्वतथ्यं वर्णयामासेत्यनुमातुंशक्यते । परन्तु इदानीन्तनधूर्तवैष्णवादिमतद्वेषिणः नतुसंतः तत्स्तोत्रपरं त्यक्तवन्त इति कल्प्यते ॥

एवं भारतेतिहासग्रन्थकर्त्रा शिवशंकरशर्मणाचवीरशैवशास्त्राननुभवेन इतिहासमप्यविचार्य " कल्याणपत्तने क्रिस्तशताब्दे । अष्टपंचाशदधिकनवशताब्दे (९५८) जन्मलब्ध बसवदण्डनायकेन (सचिवेन)

वीरशैवमतं स्थापितम् । लिङ्गधारणविधिरारब्धः । प्रधानाचार्यपीठं मैसूरराजधान्यां बभूव । इदानीं कोल्हापूरराजधान्यामानिनाय (आनीतमिति यावत्) रजस्वलादिसूतकान्न मानयन्ति । इत्यादिविषयं स्वैरेणमनसा लिखितं स्वग्रन्थे । " अपिचैतस्य कृत्स्यभावाद्युगयुगान्तरस्थितस्य—

पूर्वममसुखाज्जात ईशानाद्विश्वकर्णकः ।
लीलया पंचवर्णाख्यं महासूत्रमसीसृजत् ॥
विश्वाराध्यः सएवासीत् सोऽपि लीलामथाकरोत् ।
स्वतन्त्रो गुरुराख्यात आचार्योऽभूद्धरातले ॥
स्कन्दगोत्राधिनाथश्च महासिंहासनाग्रणीः ।
विश्वाराध्य इतिख्यातो जगद्गुरुतमश्चसः ॥

इतिसुप्रभेदागमे ॥ एवम्—

काश्यां विश्वेश्वरे लिङ्गे विश्वाराध्यस्य सम्भवः ।
स्थानं श्रीकाशिकाक्षेत्रे शृणु पार्वति सादरम् ॥

इतिस्वयम्भुवागमे ॥

एवमागमेतिहासप्रसिद्धस्य जगद्गुरुविश्वाराध्यशिवाचार्यभगवत्पादानां सनातनपीठस्य काश्यां बसवसम्प्रदायकमठोऽस्तीति लिखितवान् । कथमस्यमुक्त-

मारमतिः । येनकेन प्रकारेणवा काश्यां वीरशै
म्प्रदायकमठोऽस्तीति यदा विदितं । तदा वीरशैव
साम्प्रदायज्ञानपरिचयार्थं पत्रद्वारेण विचारि
मासीत् । किंचित्कार्यमप्यविचार्य सहसा न कर्त
मतः 'सहसा विदधीत न क्रियामविवेकः परमा
पदमिति" भारविः ॥ इदानीं वीरशैवसाम्प्रद
इति लिखितलेखनेन वीरशैवमतज्ञानं किंचिदपि
भवत्यतस्तल्लेखमुत्सृज्य अर्थात्तद्विषयमुत्पाठ्य य
शास्त्रं यथार्थवीरशैवमतप्रचारः कर्तव्यो मिश्रबन्धु
एवमेवैशेतुसेन्ग्यइीटीयरप्रभृतिपुस्तकेषु क्रिस्त
द्वादशशताब्दस्य (१२००) मध्ये बसवनैतन्मतोत्पा
जातः इति । अपि च फ्लीटसाहेब आङ्ग्लयः एतत
एकादशशताब्दस्य (११००) प्रारंभे श्रीनकुलीशाच
र्येण स्थापितमित्याद्यननुभवाल्लिलिखुः ( लिखि
वन्तः । ) अस्तु यथार्थविषयंतावद्विचारयामः । एतन्म
कलियुगप्रारम्भे ( शक्तिविशिष्टाद्वैतसिद्धान्तस
वीरशैवमतमितियावत् ) भगवत्पाद जगद्गुरु पंच
चार्याः स्थापयामासुः । अत्रप्रमाणं ।

सुप्रभेदागमे—

रेवणो मरुळश्चैकोरामः पण्डित एवच ।
विश्वाराध्य इतिख्याताः कलौ गुरुवरोत्तमाः ॥

इत्याद्युक्तम् ।
एते कलावेव स्वमतस्थापनं चक्रुरिति न । किन्तु चतुर्युगेष्वपि तत्तल्लिंगेभ्य उत्पत्तिमासाद्य भिन्न भिन्न नामभिश्चक्रिरे पूज्यपाद पंचाचार्या एव । अतः

रेणुकाद्या गणाध्यक्षा लब्ध्वा लिङ्गेभ्य उद्भवं ।
चतुर्युगेषु पीठानि स्थापयामासुरंजसा ॥
सोमेश्वरमहालिंगात्कोल्लिपाके पुरेवरे ।
जननं रेणुकार्यस्य वासः श्रीकदलीपुरे ॥
सिद्धेश्वर महालिंगाद्वटक्षेत्रे महत्तरे ।
जननं दारुकार्यस्य पीठमुज्जयनी पुरे ॥
रामनाथमहालिंगाद्द्राक्षारामे शिवाश्रमे ।
घंटाकर्ण गुरोर्जन्म वासस्थानं हिमालये ॥
श्रीमल्लिकार्जुनाल्लिंगात्सुधाकुण्डाश्रमे शुभे ।
जननं धेनुकर्णस्य निवासः श्रीगिरौशुभे ॥
विश्वनाथ महालिंगात्काशीक्षेत्रे शिवाश्रिते ।
जननं विश्वकर्णस्य स्थानं श्रीकाशिकापुरे ॥
एकाक्षरो द्व्यक्षरश्च त्र्यक्षरश्चतुरक्षरः ।
पंचाक्षर इति ख्याता रेणुकाद्या गणाः कृते ॥

एक वक्त्रो द्विवक्त्रश्च त्रिवक्त्रश्चतुराननः ।
पंचवक्त्र इतिख्याता स्त्रेतायांतु गणाधिपाः ॥
द्वापारे रेणुकश्चेति दारुकश्च द्वितीयकः ।
घंटाकर्ण स्त्रितीयश्चचतुर्थो धेनुकर्णकः ॥
पंचमो विश्वकर्णश्च प्रख्याताः पूर्वनामाभिः ॥

इति कलियुगनामानि तु प्रदर्शितान्येव । एतएव जगद्गुरुपदवाच्याः । अतः—

मत्पंचवदनोद्भूताः सर्व एव गुरूत्तमाः ।
तत्सृष्टानां च सर्वेषां तत्सामर्थ्यं कथं भवेत् ॥
तस्मात्पंचविधाचार्याः पंचपीठाधिदेवताः ।
पंचसिंहासनाधीशा जगद्गुरु तमाश्नुते ॥

इत्युक्तम् । शास्त्रंविना इदानीं पंचपीठानां तत्तत्कालीन तत्तद्देशाधिपति भूभृद्दत्त तत्तत्पीठस्थ शिलाभूर्जेनाम्रशासनादिभिः त्रिचतुःसहस्रवर्षादारभ्यैतत्पवित्रस्थानानि नाम पीठानि सन्तीति सिध्यति । उदाहरणार्थमेकंशासनाङ्कं प्रदर्श्ययामः विक्रमशके ( ६३१ ) एकत्रिंशदधिकषट्शतसंवत्सरस्य कार्तिक शुक्लदेवोत्थानैकादश्यां तिथौ तत्सामयिकजगद्गुरुविश्वाराध्यमहापीठे ( जंगमवाटिकायाम् ) विराजमान

श्रीमत्तन्त्रमल्लिकार्जुन शिवाचार्य जंगम शिवयोगि महास्वामिभ्यः तत्कालीनकाशीमहाराजजयनन्दनदेवनरेशाः भूदानं दत्तवन्तः । एतच्छासनं हिन्दीभाषायां वर्तते । एवं नेपालमहीपालत्रिभुवनमल्लादयोऽपि दत्तवन्तः । दिदृक्षुभिः काशीस्थन्यायगत्याऽवश्यं द्रष्टव्यम् । एतावता कयस्य सप्तशत(७००)नवशत(९००) वर्षाणि । करयोदश चतुर्दशशत(१३००-१४००)वर्षीयशासनानि विचारयन्तु विमलमतयो विपश्चितः । शास्त्रानुसारेण सम्प्रत्यपि रम्भापुरी, उज्जयिनी, हिमालय, श्रीशैल, काशी इत्येतत्पवित्र पंचस्थानेष्वेव मतस्थापनाचार्याणां पंचपीठानि देदीप्यन्ते । एते पूज्यपादपंचाचार्याः सर्वतन्त्रस्वतन्त्राः जगद्गुरुतमा महान्तश्चेति विश्रुताः । एत एव वीरशैव मतोत्पादकाचार्याश्च नान्ये । लिङ्गधारणविधानं च वेदागमादिसम्मतमिति निप्रदर्शितम् रजस्वलादिसूतकान् मानयामः पालयामश्च । किन्तु तत्रत्यविशेषतारतम्यज्ञानं विशेषश्च प्रदर्श्यते । यथा मन्दिरादिषु प्रतिष्ठापित श्रीशिवलिङ्गादिदेवपूजा तु रजस्वलादिसूतकसमये तदतिरिक्तशुद्धैरन्यैरन्यैः क्रियते । तथा तत्तच्छरीररूपमन्दिरप्रतिष्ठापितेष्टलिङ्गपूजा त्वन्यैः कर्तुं न शक्यते न क्रियते च । कुतः दीक्षासमये यावज्जी-

वपर्यन्तमहं करिष्यामीति संकल्पं कुर्वन्तिस्म। अतस्ते दिष्टलिङ्गपूजां कर्तुं तच्छरीरवन्तएवाधिकारिण इति। अस्तु अत्रप्रमाणं शङ्करसंहितायाम्—

नतस्य सूतकं वत्स प्राणलिङ्गाङ्गसंगिनः ।
जननोत्थं मृतोत्थं वाविद्यते परमार्थतः ॥
जातके मृतके वापि नत्याज्यं शिवपूजनम् ॥

इति यावज्जीवदीक्षितैर्लिङ्गधारिभिरशुचिकालेऽपि लिङ्गपूजाकर्तव्येति सिद्धम् ॥

आदित्यपुराणे—

देवार्चनादिकंकर्म कार्यं दीक्षान्वितैः सदा ।
नास्त्यशौचविधिस्तेषां सूतकंच महात्मनाम् ॥
शैवं देवार्चनं यस्य यस्य चाग्निपरिग्रहः ।
ब्रह्मचारियतीनां च शरीरे नास्ति सूतकम् इति ॥

एवंलिङ्गपुराणेऽपि—

अतःसर्वेषु कालेषु धारयेल्लिङ्गमुत्तमम् ।
गच्छन्तिष्ठन्स्वपन्जाग्रन्नुन्मिषन्निमिषन्नपि ।
शुचिर्वाप्यशुचिर्वापि लिङ्गंसर्वत्रधारयेदिति ॥

सिद्धान्तशिखामणौ ॥ एतद्विषय एव—

गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्राविद्यते ।
लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम् ।
तथाप्रसूतिकायाश्च सूतकं नैव विद्यते ॥इति॥
लिङ्गसारे शिवरहस्येच–
लिङ्गार्चनरतानारी सूतकान् रजस्वला ।
रविरग्निर्यथावायुः कोटि कोटिगुणः शुचिः ॥
तद्धारणात्प्रमुंचन्ति युवतिंसूतकादयः ॥इति॥
पद्मपुराणे शिवरहस्येच–
यथाह्यग्निसमावेशान्नायो भवति केवलम् ।
तथैव ममसान्निध्यान्नते प्रकृतिमानुषाः ॥
तैलयुक्तन्तु कार्पासं ज्योतिस्पर्शात्तथैवतत् ।
स्नेहयुक्तस्य भक्तेर्लिङ्गस्पर्शेनलिङ्गता ॥
एवं पराशरस्मृतौ–
शैवं लिङ्गार्चनं यस्य यस्य चाग्निपरिग्रहः ।
वानप्रस्थ यतीनांच शरीरे नास्तिसूतकम् ॥इति॥
"माहिंस्यात्सर्वाभूतानि"।"नमांसमश्नीयात् "॥
इत्यादिसामान्यवाक्यैः
नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैतत्तथान्तरा ।

न चैवात्यशनं कुर्यान्नचोच्छिष्टं क्वचिद्व्रजेदिति पशुहननमांसभक्षणादेः श्रुतिस्मृतिभ्यां दोषप्रतिपादनेऽपि । " सोमेनयजेत " । " सोमेनोच्छिष्टं " " अग्नीषोमीयंपशुमालभेत " इत्यादिविशेषविधिभिस्तादृशकर्मकरणे यथा दोषाभावस्तथा प्रदर्शित प्रमाणैर्वीरशैवानां स्त्रीपुंसयोरुभयोरपिसूतकसमये लिङ्गधारणे पूजाकरणेचदोषाभावः किंचदारिद्र्याङ्गनाभावादादिकारणेन द्वादशवर्षपर्यन्त प्रतिबन्धकीभूताऽविवाहित कन्याविवाहप्रसक्तौ माङ्गल्यतन्तुधारणानन्तरं होमकाले प्राप्ते ।

विवाहे वितते तन्त्रे होमकाले उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

इतिप्रश्ने जातर्तुमतीं कन्यां दृष्ट्वा ऋतुमती जातेति श्रुत्वावा याज्ञिकाः किंकुर्वन्तीतिप्रश्नार्थः ।

"हविष्मतीरिमा आपो हविष्मान् देवोऽध्वर इति मन्त्रेण कन्यां स्नापयित्वा नूतनवस्त्रैरलङ्कृत्य "युञ्जानः प्रथमं मन" इति द्वेआहुतीजुहुयादिति भट्टीयविवाहखण्डे प्रतिपादितत्वेन तत्ररजस्वलाशौचस्य विवाहदीक्षाऽपवादकत्वाभाववच्च । एवं पौण्डरीकादिदीर्घसत्रदीक्षितयज्वपत्न्यास्तथाविध दीक्षा

विषये च तत्त्वज्ञान्याशौचानामपवादकत्वाभाव इत्य-
र्थतोऽपि तादृगर्हत्वाविषये जाता शौचादीनाम-
पवादकत्वाभावश्च । अपिच ।

प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिग्रहः ॥इति॥

अत्र व्रतपदेन चान्द्रायणलिङ्गधारणरूपो ग्राह्यः ।
"मृतकी न स्पृशेत्" "वीरशैवः सदाशुचिः" इत्या-
दिसामान्यवाक्यानां । "लिङ्गार्चनरतानारि" "व्रत-
स्यसूतकं" "गृहे यस्मिन् प्रसूतास्त्री" त्यादि विशेष-
विधिवाक्यैर्बाधः । अतः यतिवानप्रस्थव्यतिरिक्ताः
प्रारब्धकर्माणो गृहस्था अपि मध्ये ज्ञानाशौचादि
प्राप्तावपि तत्कर्माण्याचरितुमधिकारिण एवेति स्पष्टं
भवति ॥ अथच

तनुत्रयगतानादिमलत्रयमसौ गुरुः ।
दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशत् ॥इति॥
यावज्जीवमिदं लिङ्गं शरीरान्नवियोजय । एवं
लिङ्गधारणकं नामव्रतं माहेश्वराभिधम् ।
यावज्जीवमिदं दत्तमिष्टलिङ्गं समर्चयेत ॥ इत्यादि
स्कान्दादिपुराणोक्तरीत्या च लिङ्गधारणस्य पूजायाश्च

दीक्षासमये गुरुसन्निधौ यावज्जीवपर्यन्तं करिष्या
इति सङ्कल्पकरणान्मध्ये प्राप्तान्तरालिकाशौचा
प्रसक्तावपि पूजाधारणावनुष्ठेतव्यावितिसिद्धम् ।
न्वत्र दन्तधावनगण्डूषजलादिना पवित्रीकृतमुख
मन्त्रोच्चारणादौ शुद्धत्वेप्यन्यशरीरनिष्ठीवनादौ य
ऽशुद्धत्वम् नाम अपवित्रत्वम् । तथा लिङ्गपूजाधा
णविषययोरेव पावित्र्यं नतु कार्यान्तरेष्विति
विस्मर्तव्यं । अथच

" यज्ञोपवीतं परमं पवित्रामि " ति यथासर्वावस्था
यज्ञोपवीतं धार्यते तथा तत्स्थानीयं लिंगं । अपि

नानिरोधस्त्वनाध्याये होममंत्रेषु चैवहि ।
नैमित्तिकेऽस्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतमिति

मनुस्मृत्यनुसारेणानित्यसङ्कल्पितसन्ध्यावन्दन का
प्राप्तसूर्याद्युपस्थानविनियुक्त " मित्रस्य " इत्या
मन्त्रोच्चारणस्य नित्योपासनीयवैश्वदेवादिविनियु
मन्त्रपाठस्य दर्शपूर्णमासेष्टि विनियुक्तवेदपाठस्य च
अनध्ययनकालकर्तव्यत्वेऽपि यथा न वेदाध्ययनस
कर्तव्यत्वम् । तथाऽशुचिकाले यावज्जीवसङ्कल्पि
शिवलिङ्गपूजाधारणकरणेऽपि नकर्मान्तरानुष्ठेतव्य
नि । किंबहुना ।

जातके मृतके शौचे मलमूत्रविसर्जने ।
स्नानशुद्धावुद्योगे रणे निद्रादिषु प्रिये ॥
कर्मणा मनसा वाचा जाग्रत्स्वप्नसुषुप्तिषु ।
तल्लिङ्गमुत्सृजेत्क्वापि प्राणैः कण्ठगतैरपि ॥

इत्यादिप्रमाणैश्चानुष्ठेयत्वाच्चेति ॥

अथचैवमत्र अशुचिशरीरसम्बन्धाल्लिङ्गस्याप्यशुचित्वमिति नोच्यतं नशक्यतेच तथावक्तुम् । कुतः प्रथमं दीक्षासंस्कारेण पवित्रीकृतशरीरे शिवसम्बन्धेन शिवमयत्वादशुचित्वमेव नास्ति । अपि च "तस्मात्सर्वगतः शिव" इति श्रुत्यवगमितानिरस्तसमस्तदोषलवकलङ्कस्य शुच्यशुचिवस्तुसाधारणतया वर्तमानस्यसर्वान्तर्यामिशिवस्य अशुचिशरीरसम्पर्केण दोषापादानासम्भवात् । तथासति नामाऽशुद्धत्वे पूर्वोक्तश्रुतिस्मृत्यागमादयः सर्वे निरर्थकाः स्युरित्यलंपल्लवितेन । एतद्विषये शिवराघवसंवादादिष्वेवं बहूनि प्रमाणानि सन्ति । विस्तारभयाद्दिङ्मात्रं प्रदर्शितम् ॥ स्त्रीणान्तु लिङ्गपूजाधारणमात्रेऽधिकारस्तत्रापि पितृपतिपुत्राद्यनुज्ञयैव यदाकदापि यस्मिन्नपिवा कर्मणि नस्वातन्त्र्येणाऽधिकारः । अतः क्रियासारे त्रयोदशोपदेशे शिवसंस्कारकर्मणि

र्थेतु योग्यास्नानप्रदर्श्य अग्रेएवंवक्ष्यति ।

नाधिकारः स्वतो नार्याः शिवसंस्कारकर्मणि
नियोगाद्भर्तुरस्त्येव यदिभक्ता महेश्वरे ॥
तथैवभर्तृहीनायाः पुत्रादेरभ्यनुज्ञया ।
अधिकारो भवत्येव कन्यायाः पितुराज्ञया ॥
शूद्राणामन्यजातीनां पतितानां विशेषतः ।
तथाऽसंस्कारजातीनां नाध्वशुद्धिर्विधीयते ॥
तेऽप्यकृत्रिमभावाश्चेच्छिवे परमकारणे ।
पादोदकप्रदानाद्यैः कुर्यात्पाशविशोधनम् ॥
अतानुलोमजाता ये युक्तमेवद्विजातिषु ।
तेषामध्वविशुध्द्यादिकुर्यान्मातृकुलोचितम् ॥ इति

अथ दीक्षाशब्दस्वरूपनिरूपणं तत्फलंच निरूप्यते ।

वीरशैवमते तावदुपनयनपर्यायो दीक्षाशब्दःप्रयुज्ज
या क्रिया आणवमायाकार्मिकमलत्रयं दूरीकृत
( दग्ध्वा ) शिवसम्बन्धितत्वज्ञानं ददाति । सा द
क्षेति तस्याः दीक्षेति कथयन्ति शास्त्रज्ञाः । एवमे
वीरशैवसिद्धान्तग्रन्थेषु 'दा' दाने 'क्षी' क्षये इ
दानक्षयार्थकधातुद्वयेन दीक्षाशब्दव्युत्पत्तिं प्रदर्श्य
स्पष्टमेवमुक्तवन्तः ।

दीयते च शिवज्ञानं क्षीयते पाशबन्धनम् ।
यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैःइति ।
सिद्धान्तशिखामणौ चानुक्तं –
दीयतेच यया ज्ञानं क्षीयतेच मलत्रयम् ।
सा दीक्षासंज्ञिता तस्यां गुरुर्दीक्षागुरुस्मृतः ॥
दीयतेपरमं ज्ञानं क्षीयते पाशबन्धनम् ।
यया दीक्षितसा तस्यां गुरुर्दीक्षागुरुः स्मृतः ॥

एवं पारमेश्वरे –

दीयते लिङ्गसंबन्धः क्षीयतेच मलत्रयम् ।
दीयते क्षीयते यस्मात्तस्माद्दीक्षेति कथ्यते ॥
सादीक्षा त्रिविधा प्रोक्ता शिवज्ञानविशारदैः ।
वेधारूपा क्रियारूपा मन्त्ररूपाच तापस ॥
गुरोरालोकमात्रेण हस्तमस्तकयोगतः ।
यः शिवत्वसमावेशो वेधादीक्षेति सामता ॥
मान्त्रीदीक्षेतिसाप्रोक्ता मन्त्रमात्रोपदेशिनी ।
कुण्डमण्डलकोपेता क्रियादीक्षेति कथ्यते ॥
तनुत्रयगतानादिमलत्रयमसौ गुरुः ।

दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशत् ॥
यथा पुरत्रयं दग्धं युगपत्पुरवैरिणा ।
तथा मलत्रयं दग्धं युगपद्देशिकात्मना ॥
त्रिष्वङ्गेष्वस्य शिष्यस्य लिङ्गत्रयमसौ गुरुः ।
संयुयोज त्रिधाभूत परदीक्षा बलेनतु ॥
योगाङ्गे भावलिङ्गन्तु वेधादीक्षाबलेनतु ॥
मान्त्रीदीक्षा बलेनैव भोगाङ्गे प्राणलिङ्गकम् ॥
क्रियादीक्षाबलेनैव देशिकः सत्यचिद्घनः ।
इष्टलिङ्गं तथा चैव त्यागाङ्गे समयोजयेत् ॥
योगाङ्गमात्मसङ्गत्वात्कारणाङ्गमितीरितम् ॥
भोगाङ्गमन्तरङ्गत्वात्सूक्ष्माङ्गमिति सम्मतम् ॥
त्यागाङ्गं बहिरङ्गत्वात् स्थूलाङ्गमिति कीर्तितम् ॥

॥ इति ।

कस्यामवस्थायां तत्तल्लिङ्गोपासना कथं कर्तव्या उपासनास्वरूपं च किमिति प्रदर्शने ग्रन्थविस्तारो भवेदिति हित्वा प्रकरणवशाद्दीक्षास्वरूपं प्रदर्शितम् । प्रागुक्त दीक्षात्रयमध्ये आद्यदीक्षाद्वयस्य कारण सूक्ष्म शरीरगत भावप्राणयोरुपदेशं कर्तुं योग्यत्वात्

प्रवृद्धावस्थां विना तत्संघटनं नशक्यम् । क्रियादीक्षा तु रक्तरेतोत्पन्नत्वादत्यन्ताऽशुचिभूतस्थूलशरीरस्यैव क्रियासंस्कारेण पवित्रीकर्तव्यत्वात् केवलाज्ञाने बालावस्थायामेव क्रियते । अतः या गर्भाष्टमे कृता दीक्षा सैवाष्टवर्षे उपनयनाद्यनुष्ठानार्थं संस्क्रियते । अतएव वीरशैवानामपि " गर्भाष्टमे कृता दीक्षा मुख्यामता " इत्यादीनि प्रमाणानि सङ्गच्छन्ते । उपनयनेनापि तथा मांसमयं पिण्डं तच्छरीरं मन्त्रमयं पवित्रं भवति । संस्कारेणावश्यं पूर्वोच्छिन्नं भवतीत्यतो दीक्षादि तत्तत्संस्कारेण तत्तदधिकारवन्तः द्विजस्य ब्राह्मणस्याधिकारवन्तो भवन्तीति यावत् । एतच्चैतत् समस्ताम्नायमतावलम्बिभिरङ्गीक्रियत एव । उपनयनं विना वीरशैवाः ( दीक्षां विनेतियावत् ) स्वेष्टलिङ्ग पूजां कर्तुं नार्हन्ति विना दीक्षया पूजादिकं कर्तुमाधिकारिण एव न भवन्ति । अदीक्षितकृतं पूजादिकं कर्म न फलदायकं निष्फलं फलशून्यत्वात् चैत्यवन्दनवत् ॥

अत्रप्रमाणन्तु–

उपदेशं विना लिङ्गं प्रपूजयति यो नरः ।
नरके पच्यते देवि सूपदेशहीयतः स्मृतः ॥

यथा मृगपतिं दृष्ट्वा भवेद्भीतो वने गजः ।
अदीक्षितोऽर्चयेल्लिङ्गं तथा भीतो महेश्वरः॥
त्रिपुण्ड्रंचैव रुद्राक्षं नित्यार्चनजपं तथा ।
होमध्यानादिकं सर्वं दीक्षाहीनस्य निष्फलम्
अदीक्षितश्चतुर्वेदी न विशेद्धर्मगेहकम् ।
प्रमादाद्धर्मगेहन्तु प्रायश्चित्तन्तु कारयेत् ॥
अदीक्षितश्चयो विप्रः कुर्याल्लिङ्गस्य पूजनम्
अरण्ये निर्जने देवि भवति ब्रह्मराक्षसः ॥
चतुर्वेदी त्वहङ्कारी शिवलिङ्गन्तु पूजयेत् ॥
राजराष्ट्र विनाशश्च तस्यग्रामोऽपि नश्यति ॥

एतत्फलंच वक्ष्यमाणरीत्या वीरशैवसिद्धान्तग्रन्थे
अर्थाद्वीरशैवाचारकौस्तुभादिषु प्रदर्शितमस्ति ।

दीक्षया मुच्यते देही त्रिविधाद्भवबन्धनात् ।
शिवत्वं याति सततं नपुनः पशुतां व्रजेत् ॥
रसविद्धं यथाताम्रं ताम्रभावाद्विमुच्यते ।
सुवर्णेन सहैकत्वं गतं तद्याति हेमताम् ॥
नवनीतं यथा तप्तं तत्स्वभावं परित्यजेत् ।

घृतत्वभावमापन्नं न पुनर्नवनीतताम् ॥
यथा शुक्तिगतं तोयं मौक्तिकं भवति ध्रुवम् ।
न पुनस्तोयतां याति मौक्तिकत्वं न मुञ्चति ॥
यएव शिवतां प्राप्तो न पुनः पशुतां व्रजेत् ।
शिवत्वं नत्वहीयेत विमुक्तो दीक्षया भवेत् ॥

इत्यादीन्यनुसंधेयानि–

केचित्त्वागमतत्त्वानभिज्ञाः तत्तद्ग्रन्थस्य पूर्वापरग्रन्थानवलोक्य सामान्यतः शिवागमानामप्रामाण्यमिति वदन्ति पाषण्डयः। तेषामभिप्रायस्त्वित्थम् ॥

एवं संचोदितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
कापालं मुद्गलं वामं भैरवं पांचरात्रकम् ।
पाषण्डिनो विकर्मस्थान् वामाचारांस्तथैव च ॥
पांचरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत् ॥

इत्येतावतैव–अग्रिमकूर्मपुराणमविगणय्य अनवलोक्य अविचार्य यदालोकनमेव न तदा विचारस्तु दूर एव। विचाराभावादेव शिवकेशवाभ्यां मोहनागमाः प्रणीता अतस्तेषामप्रामाण्यमित्याहुः तन्नोचितम् । तस्मिन्नेव कूर्मपुराणे भगवच्छिवेनैवं प्रतिपादितम् ।

तथाच श्रीशिवउवाच—

निर्मितंहि मयापूर्वं व्रतं पाशुपतंशुभम् ।
गुह्याद्गुह्यतरं सूक्ष्मं वेदसारं विमुक्तये ।

एषः पाशुपतो योगः सेवनीयो मुमुक्षुभिरिति पतिः परमेश्वरः । पशुर्जीवः । एतदुभयव्यतिरिक्त चेतनं सर्वं पाशइति । त्रितयपदार्थज्ञानं मोक्षकारणमितियावत् । एवंच रुद्राक्षालिङ्गधारणरूपपाशुपतव्रतप्रतिपादकाऽगमानां श्रौतत्वमिति प्रतिपाद्य अतावदेवंनिरूपितम् ॥

अन्यानि शैवशास्त्राणि लोकेस्मिन् मोहनानि वै
वेदवादविरुद्धानि मयैव कथितानितु ॥

इत्युक्त्वा ॥

वामं पाशुपतं सोमं लाकुलं चैव भैरवम् ।
नसव्यमेतत्कथितं वेदबाह्यं तथेतरदिति ॥

अपिच—

यानिशास्त्राणि दृश्यन्ते युगेऽस्मिन् विविधानितु
श्रुतिस्मृतिविरुद्धानि तेषां निष्ठाहि तामसी ॥
कापालं पांचरात्रंच यामलं वाममर्हतम् ।

एवंविधानि शास्त्राणि मोहनार्थानितानितु ॥

एतच्चैव श्रुतिस्मृतिविरोधितन्त्राणां शुद्धाद्वैताप्रमाणा नर्थोक्त्यागमानामेव ऽन्यान्यपेक्षं प्रमाणान्येवामेवा- प्रामाण्यं ननु वेदा विरुद्धत्वेन शिवप्रणीतशैवागमा- नाम् ॥ एतादृशविचारेणैवाऽन्याधिका सर्वागमाना मप्रामाण्यमिति दर्शितं वर्तते च सूक्ष्मतया । शिवोक्ताष्टाविंशत्यागमाश्च ॥

कामिकाद्या वातुलान्ताः शिवेनोक्ताःशिवागमाः ।
सिद्धान्ता इतिविज्ञेया उपभेदसमन्विताः ॥
कामिकं योगजं चिन्त्यं कारणंत्वजितं तथा ।
दीप्तं सूक्ष्मं सहस्रंचाप्यंशुमान् सुप्रभेदकः ॥
विजयं चैव निश्वासः स्वायम्भुवमथानलम् ।
वीरंच रौरवं चेति मुकुटं विमलं तथा ॥
चन्द्रज्ञानं च विम्बंच प्रोद्गीतं ललितं तथा ।
सिद्धसन्तान शर्वोक्तं पारमेश्वरमेवच ॥
किरणं वातुलंचैता अष्टाविंशतिसंहिताः ।

वेदाविरुद्धत्वेनैते प्रमाणीभूताः प्रमाणत्वेनाङ्गीक्रियन्ते इत्यर्थः ॥

अत्रप्रमाणानि—
सूतसंहितायां शिवमाहात्म्यखण्डे व्यासवचनविश्र-म्भणीयत्वप्रस्तावे—

अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।
कामिकादिप्रभेदानां यथादेवो महेश्वरः ॥

इत्येतद्व्याख्याने श्रीविद्यारण्यपूज्यपादैः व्यासवच-नेषु विश्वासोत्पादनार्थमष्टादशेत्युपक्रम्य कामिका दीनां शैवागमानां शिवोक्ततया यथा प्रामाण्यम् । तथा नारायणावतारस्वरूपव्यासप्रणीतानामष्टादशपुराणानां प्रामाण्यमितिप्रतिपादनम् ॥ एवमेव— प्रबोधचन्द्रो दयनाटकस्य पंचमाङ्के— सांख्यादि शास्त्राविरुद्धां पूर्व मीमांसां सम्यग्वर्णयित्वाऽऽगमानामवदेवं शङ्कासमा धानंचकृतं मूले ग्रन्थकारेण श्रीमत्कृष्णमिश्रयतिना ।

" अये कथंपुनः स्वभावविरुद्धानामागमानां तर्का-णांच समवायः सम्पन्नः "

इतिशान्तिपात्रेण प्रश्नीकृत्य श्रद्धापात्रेणोत्तरितम् ॥

समानान्वयजातानां परस्परविरोधिनाम् ।
परैः प्रत्यभिभूतानां प्रसूते सङ्गतिः श्रियम् ॥
येनवेदप्रसूतानां तेषामवान्तरविरोधोऽपि

वेदसंरक्षणाय नास्तिकपक्षप्रतिक्षेपणाय शास्त्राणांसाहित्यमेव आगमानांच तत्त्वं विज्ञायतामविरोधश्चेति ॥

अत्रव्याख्यानकारैरेवंप्रतिपादितमस्ति ॥ अयं स्वतन्त्रधर्मनिष्ठानां विरोधिनामिवायतन आगमानाम् । आगमाः पांचरात्रशाम्भवकवामवत्स्यसंहितादयश्च । परस्परविरोधिनांतेषां शास्त्राणांच समवायः एकत्रसमावेशः कथंसम्पन्नःइति ॥ अयं भावः । वैष्णवानां देवतान्तरवन्दननिषेधः । तत्रचक्राङ्कनं मातापितृव्यतिरेकेण गुर्वन्तरसर्वाकारो गृहस्थानाम् । तेषांतथारवाद्रिशुद्रादिवन्दनंच । शैवानांतु विरुद्धं लिङ्गधारणं तेषां गृहस्थानां जटाधारणं । प्रमादलिङ्गादिकैःषड्भिःस्थलैर्व्यवहारे वैष्णवानामसम्मतम् । शास्त्राणांपरस्परविरोधः स्पष्टएवेति । षट्स्थलविचारः वीरशैवशास्त्रप्रसिद्धइतिप्राक्प्रदर्शितः । आगमानामविरोधस्तु मूले स्पष्टम् । एवं श्रीमदगस्त्याय जगदाचार्यश्रीरेणुकभगवन्तः सिद्धान्तशिखामणिपंचमपरिच्छेद एवमुपदिदेशुः ।

अगस्त्य खलुसिद्धान्ता विख्याताश्चिभेदतः ।

भिन्नाचारसमायत्ता भिन्नार्थप्रतिपादकाः ॥
सांख्यो योगः पांचरात्रं वेदाः पाशुपतं तथा ।
एतानि मानभूतानि नोपहन्यानि युक्तिभिः ॥
वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने ।
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम् ॥

पांचरात्रस्य सांख्यस्य योगस्यच तथामुने ।
वेदैकदेशवर्तित्वं शैवं वेदसमं मतम् ॥
वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने ।
सर्ववेदानुसारित्वाच्छैवतंत्रं विशिष्यते ॥
शैवतन्त्रमितिप्रोक्तं सिद्धान्ताख्यं शिवोदितम् ।
सर्ववेदार्थरूपत्वात्प्रामाण्यं वेदवत्सदा ॥

आगमा बहुधाप्रोक्ताः शिवेन परमात्मना ।
शैवं पाशुपतं सोमं लाकुलंचेति भेदतः ॥
तेषुशैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।
वामं च दक्षिणंचैव मिश्रं सिद्धान्तसंज्ञकम् ॥
शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।
सप्तमातृपरं मिश्रं सिध्दान्तं वेदसम्मतम् ॥

वेदकर्माभिधायित्वात्सिद्धान्ताख्यः शिवागमः ।
वेदभाष्याविरुद्धत्वाद्वेदसम्मत उच्यते ॥
वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात् ।
प्रामाण्यं सदृशं ज्ञेयं पंडितैरेतयोः सदा ॥
सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परमिति ॥

क्रियासारे चाथ वेदागमानां प्रामाण्यं शंकरात्मसमाधानतः सम्यगुपपादितम् ॥

तथा च क्रियासारे—

कापिलादिमतान्याहुः शैवानन्यानि यानि च ।
अवैदिकानि सर्वाणि नात्रेरक्तानि वैदिकाः ॥
विरोधिनश्च तत्रैते श्रुतिमार्गानुरोधिनः ।
कर्षणादिप्रतिष्ठान्ता वैदिकानुष्ठिता यथा ॥
तथैव वीरशैवानामागमा वैदिका मताः ।
वेदाविरुद्धरूपेण वैदिकत्वमुदाहृतम् ॥
अथवा शिवनिश्वासश्रुतिभ्यस्ते शिवागमाः ।
अधिकाः शिववक्त्रेभ्यः साक्षादेव विनिर्गताः ॥

परस्पराविरुद्धार्थाः शिवोक्ता निगमागमाः ।
अल्पबुद्धिभिरन्योन्यविरोधः परिकल्प्यते ॥
निगमानामागमानां परमाप्तोपदेशतः ।
प्रामाण्यमविशेषेण ज्ञातव्यं तत्वदर्शिभिः ।
प्रामाण्यमविशेषेण निगमागमवर्त्मनाम् ।
आगमा द्विविधा ज्ञेया वेदानामविरोधिनः। इति
शिवपुराणेऽप्येनद्विषये तावदित्थमूचुः–
शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च सस्मृतः ।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः ॥
स्वतन्त्रा दशधापूर्वं तथाष्टादशधा पुनः ।
कामिकादि समाख्याभिः सिद्धः सिद्धान्तसंज्ञितः।
श्रुतिसारमयो यस्तु शतकोटि प्रविस्तरः ।
परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥
इत्यादिभिरागमानां प्रामाण्यं निर्बाधम् ।
अपिच वीरागमे–
अष्टाविंशतिभेदेन प्रोक्तं शैवमिति स्मृत–
मित्यारभ्य । आगमनामान्युल्लेख्य–
आगमेषु च वेदेषु वेदान्तोपनिषत्सुच ।

धर्मस्तु शाश्वतः प्रोक्तो मुक्तिमोहेश्वरो महान् ॥
इत्युक्त्वा सूक्तस्तु तावत्तेषामागमानां प्रामाण्यं प्रदर्शितम्
विस्तारभयेन । विस्तारभयाद्दिङ्मात्रं प्रदर्शितम् ।
इमौ पूर्वापरौ ग्रन्थानुसिन्नयत्र हृत्येन । परमतोत्कर्षा-
सहिष्णुतया केचन जनस्यान्ध श्रुत्युक्तमेव श्रौतं नान्यदि-
ति विरुद्धवृत्तया आगमानामप्रामाण्यमिति वदन्तु स्मृ-
ति पुराणोक्तकर्मणामप्यननुष्ठेयतापत्तेः इत्यपरिनिग-
मिन्वन्तःक्षानतर्थः कल्पयेत । कुतः
वीरशैवागमे शैवे धर्मे शिवपरिग्रहे ।
जङ्गमे प्राणलिङ्गाख्ये शिवलिङ्गार्चने गुह ॥
शिवस्थानेषु सर्वेषु वाराणस्यादिकेषु च ।
विपरीता भवेद्बुद्धिर्यस्य स्यात्स बहिर्नरः ॥
शिवनिंदापरो मूढः शिवशास्त्राविनिन्दकः ।
तस्यतो निष्कृति दृष्टा क्वापि शास्त्रेऽपिकेनचे ति
स्कान्दे शिवधर्मोत्तरादिवचनैर्मरणान्तप्रायश्चित्त नि-
ष्कृत्यभाव बहिष्कार्यत्वादि विधानविरोधापत्तेः ॥
अपिच तत्तन्मन्दिरेषु तत्तद्देवप्रतिष्ठादि काले करणीय
द्वादशसंस्काराणाम् अर्थात् ।
कुण्डमण्डपनिर्माणं तत्तत्संस्कारमेवच ।

वास्तुपूजात्र हवनं पालिकासुप्रतिष्ठितम् ॥

इत्यादीनामथच–

अधः पट्टिकाद्याज्यप्रनारिकान्तं तत्तत्स्थानविशेषे भुवनतत्व कला मन्त्र पदवर्णाध्व न्यास विधायक वचनानां स्थावरे कर्षणादिप्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तं च कर्तव्यतारूप तत्तत्कर्मविधायकवचनानां कामिक कारणाद्यागमान्तर्गतत्वेनपुराणाद्यभावेनच तेषामेवाप्रमाण्ये तल्लिङ्गिसंस्कारणां सुतरामप्रामाण्यं। तथा च तल्लिङ्गिसंस्काराद्यभावेन सकलवैदिक जनावश्यक स्थावरलिङ्गप्रतिष्ठाद्यसिद्धेश्च॥ इयतापि हठादूढेषबुध्या वा यदिवेदोक्तमेव वैदिकं नान्यदित्युच्यते चेत्तर्हि श्रूयताम्।

यदि वेदोक्तमेवस्याद्वैदिकं परमार्थतः।
एकादशी व्रतादीनां श्रुत्यचोदितकर्मणाम् ॥
अवैदिकत्वात्सर्वेषामननुष्ठेयता भवेत्।
वेदाविरुद्धानुष्ठानात्पातित्यं चापतत्तदा ॥
यद्यनुष्ठेयमेवस्यादेकादश्यादिकं बुधैः।
शैवागमास्तदाचारा वैदिका नेतिकाप्रमा ॥
स्मृतिभिश्च पुराणैश्च विहिता एव वैदिकाः।

शैवागमेषु विहितानितरेष्वैदिका यदि ॥
स्मृत्युक्ता वैदिका नेति कृतमन्यं नैव भाषसे ।
वैदिकास्ते भवेयुश्चेदागमोक्ताश्च वैदिकाः ॥
अतएवाचरन्त्येतान् वैदिकाः सकला बुधाः ।
आत्मयोन्मयकर्मादीन् मुक्तये शाम्भविन्मयाः ॥

प्रत्येकं पृथगुदाहरणप्रदर्शनं ग्रन्थविस्तारोऽभीत्य न वर्णितं विस्मयत ॥ एतावता प्रदर्शितमघोरिकक प्रमाणं वेदवदागमानां प्रमाण्यमिति सिद्धम् ॥

श्रीमज्जगद्गुरुश्रीशिवलिङ्गशिवाचार्यविरचितगाथा

अघोरमुखसंजातः पण्डिताराध्यो जगद्गुरुः ।
सूर्यसिंहासनाध्यक्षश्रीशैलपविराजते ॥

अथलिङ्गाङ्गसामरस्यंतावन्निरूप्यते ।

अत्रापि लिङ्गपदेन परब्रह्मापरपर्यायवाची शिवो गृह्यते । ब्रह्मशब्देन यादृशार्थो लभ्यते लिङ्गपदेनापि तादृशार्थो लभ्यतएवेति प्राक्प्रतिपादितमेव ।अङ्गश-ब्दस्तुशरीरे प्रसिद्धः ।अत्रात्माऽङ्गपदेनगृह्यते।अतएव शिवएव भवेल्लिङ्गमात्मैवाङ्गं भवेत्खलु इत्यादि प्रमाणानि सङ्गच्छन्ते । एवंचानयोर्लिङ्गाङ्गयोरविना

भावेन वर्तमानत्वं समरसत्वम् (एकत्वमितियावत्) अर्थात् लिङ्गाङ्गयोः परस्परानित्य संबन्धत्वमित्यर्थः लिङ्गाङ्ग समरसात्मकफलार्थमेव वीरशैवैः सदा देहेषु लिङ्गानि धार्यन्ते । तत्सम्बन्धेन अर्थात् प्रत्यहं तल्लिङ्गं दृष्ट्वा दृष्ट्वा ध्यात्वा ध्यात्वा कीटभ्रमरन्यायेन :

कीटो भ्रमरयोगेन कीटोऽपि भ्रमरायते ।
मानवः शिवयोगेन शिवोहि भवतिध्रुवमिति ॥

प्रमाणानुसारेणतत्फलं लभन्ते।लिङ्गाङ्गसामरस्यरूपामृतं च पीयन्ते। अत्र सर्वज्ञत्वाद्यसाधारण लक्षणवतः शक्तिविशिष्टस्य सकलचराचर प्रपंचसृष्टिस्थित्यादेर्भित्तिरिवाधारभूतपरमात्मनः स्थलमितिवदंति । तत्परशिवे पूज्यपूजकलीलामात्रेण तरङ्गभावान्निशब्दीभूताब्धौ प्रथम निष्पन्नलहरीव स्पन्दो जातः तेन शक्तिविशिष्टः परमात्मैव द्विविधोऽभूत् । तयोरधिकांशप्राप्तस्पन्दगत्या प्रविष्टमूल प्रणवरूपाशिवचैतन्यमेव लिङ्गमित्यभवत् । न्यूनांशलब्धशिवचैतन्यमेवांगमित्यभूत् । अत्रतु लिंगमुपासकानामनुग्रहार्थसद्रूपमिष्टलिंगमिति सच्चिद्रूपं प्राणलिंगं सच्चिदानंदरूपं भावलिंगमितिच त्रिविधं बभूव

नानिव चक्षुरादिभेदेन षड्विधान्यासन् । षड्विधलिङ्गानामपि मूलभूतपरमात्मन्यधिनाभावेन स्थितशक्तिरपि क्रमशः शान्त्यतीतोत्तरा, शान्त्यतीतकला, शान्तिकला, विद्याकला, प्रतिष्ठाकला, निवृत्तिकलेति षड्विधा षड्लिङ्गान्याश्रिता ॥ यथोदधिजन्यतरङ्गाः सागराद्भिन्नास्तथा मूलतत्त्वाज्जातषड्भेदा अपि मूलतत्त्वादभिन्ना एवेति नियमेन शक्तिविशिष्टः परमात्मेत्यग्रे वक्ष्यति । षड्विधलिङ्गेषु भावलिङ्गभेदभूतमहालिङ्गं सर्वपदार्थग्राहकमनसा ऽनुसन्धानभूतमीशानमुखमिति ज्ञातम् । प्रसादलिङ्गं शब्दरूपगुणग्राहकश्रोत्रेन्द्रियरूपेण शान्त्यमुखमिति । प्राणलिङ्गभेदभूतजङ्गमलिङ्गं स्पर्शगुणग्राहकत्वगिन्द्रियरूपेण तत्पुरुषास्यमिति । शिवलिङ्गं रूपगुणग्राहकचक्षुरिन्द्रियेणाघोरवक्त्रमिति । इष्टलिङ्गभेदभूताचारलिङ्गं गन्धगुणग्राहकघ्राणेन्द्रियरूपेण वामदेववदनमिति । गुरुलिङ्गं रसगुणग्राहकरसनेन्द्रियरूपेण सद्योजातमुखमिति ज्ञातम् ॥ एवं रीत्याआकाशादितत्त्वान्यधिकांशैः षड्विधलिङ्गानीति परिणतानि जातानि । सर्वज्ञत्वादि प्रभृतिस्वभावधर्मैरनन्तशक्तिभिश्च साकं स्थितपरमात्मनो न्यूनांशलब्धाङ्गमुपाधिभेदेन योगमा-

गत्यागाङ्गमित्यङ्गत्रयमभवत् । एतत्त्रिविधाङ्गानि लिङ्गविभागमनुसृत्य ऐक्यादिषड्विधान्यासन् । इति ज्ञेयम् ॥

लिङ्गाङ्गसामरस्यबोधकमहावाक्यानितु–

" तत्त्वमसि " " अहं ब्रह्मास्मि " " अयमात्मा ब्रह्म " " प्रज्ञानं ब्रह्म " इत्यादीनि ॥

एषु मुख्यभूतं प्रथमवाक्यार्थं तावद्विचारयामः । तत् । त्वम् । असीति पदत्रयमस्तिकिल । अत्रास्मद्राद्धान्तः ( वीरशैवसिद्धान्त इति यावत् ) इत्थं तत्पदेन लिङ्गम् । त्वंपदेनजीवशरीरक आत्मा । शरीरवाचकपदानां शरीरिपर्यन्तत्वानुधावनमिति न्यायेन जीवशरीरकआत्मा गृह्यते । अनयोः नाम जीवशरीरकात्मनः सर्वान्तर्यामिपरमात्मनश्चाऽनन्यत्वादसिपदेनैक्यम् । एतावता श्वेतकेतो युष्मच्छरीरकात्माभिन्नं ब्रह्मासीत्यर्थः "शास्त्रदृष्ट्यातूपदेशो वामदेववत्" ॥ इति ॥ ब्रह्मसूत्रानुसारेण परमात्मोपासनयोत्पादित ब्रह्मात्मसामरस्यभावनया ब्रह्मैवाहमिति ब्रह्मत्वप्राप्तवामदेववत् । तत्त्वमसीतिवाक्येन तत्स्वरूपमिति यावत् । एतेनशिवजीवैक्यं प्रदर्शितं महावाक्येनाऽपि ॥

मिथ्यात्वं प्रतिपादयन्ति ॥ परं यथामृत्तिकाजातघट-शरावादयस्तत्स्वरूपवन्तः ( मृत्स्वरूपवन्तइत्यर्थः ) तथाशिवनिर्मितमेतज्जगत् शिवस्वरूपमित्यभेदं प्रदर्शयन्ति ॥

यथा नक्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । यथोदपानकरणात् क्रियते नजलाम्बरम् । सदेव नीयते व्यक्तिं असतः सम्भवः कुतः । यथोर्णनाभिः सृजते गृह्णतेच यथापृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवन्तीहविश्वम् इत्युपनिषदोऽपि प्रमाणाः । अपिच ब्रह्माद्वैतिनः केवलंज्ञानेनैवमुक्तिरत्रप्रमाणं तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय इतिश्रुतिरित्याहुः ।

शिवाद्वैतिनां वीरशैवास्तु न केवलंज्ञानेन मोक्षः किन्तु ज्ञानकर्मभ्यांमोक्षः । यथाग्रामान्तरं जिगमिषवः पंग्वन्धाः प्रत्येकं गन्तुमसमर्थास्तथा न केवलं ज्ञानेन मोक्षःकर्मणाच । किन्तुज्ञानसहितकर्मणा कर्मयुक्तज्ञानेनैव मोक्षः अतः ।

विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह ।

अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥

इति ज्ञानकर्मणोस्समसमन्वयमुक्तम् ॥ अथच

तं ध्यात्वा मृत्युमत्येति नान्यः पन्था विमुक्तये ।
ध्यात्वा मुनिर्गच्छति भूतयोनिम् इत्यादयः ध्यानेनैव मुक्तिर्गतिरिति प्रतिपादयन्ति । ध्यानन्तु मानसिकं कर्मैव । अस्यैवान्तर्लिङ्गधारणमिति वयं ब्रूमः । बहिर्धृतेष्टलिङ्गद्वाराऽन्तःस्थितप्राणलिङ्गं पश्यामो धानुष्कवत् । एतच्च विस्तरेण प्राक्प्रदर्शितमेव । लिङ्गत्रयविभागेन लिङ्गाङ्गसामरस्यरूपममृतं पिबन्ति शिवाद्वैतिनः । अपिच । अं गच्छतीत्यङ्गमिति व्युत्पत्त्या चाङ्गशब्दवाच्यो जीवः । लिङ्गशब्दवाच्य ब्रह्माभ्यासबलेन गतमलत्रयः सन् तत्स्वरूपं लभते । अर्थाद्भुभयोः परमात्मजीवात्मनोरभेदप्रत्ययः सम्भवतीतियावत् । यथालोके मन्त्रवादीत्वहमेव गरुत्मानिति मन्त्रपुरश्चरणेन स्वगुणान् विहाय गरुडनिष्ठसर्पनिरोधादिकधर्मवान् भवति । एवं तप्तायः पिण्डं अयोधर्मं विहाय अग्नि स्वरूपं भवति तथालिङ्गाङ्गयोरभेदः ।

अथच–

यथा नद्यः स्पन्दमानाः समुद्रेऽस्तं गच्छन्ति ना-

मरूपे विहाय तथा विद्वान् नामरूपाद्विमुक्तः परा-
त्परं पुरुषमुपैति दिव्यम् ॥

यथा गङ्गादिमहानद्यः समुद्रं प्रविश्य तत्स्वरूपवत्यो भवन्ति । तथा जीवात्मा शिवं लब्ध्वा शिवस्वरूपवानेव भवतीति यावत् । एतावता महावाक्येनापि लिङ्गाङ्गसामरस्यरूपं शिवजीवैक्यं प्रदर्शितं । क्रियासारकारिणाप्येवमेव प्रतिपाद्यते–

लीनार्थगमकं लिङ्गमन्यदङ्गमुदीरितम् ।
लिङ्गाङ्गयोःसामरस्यं जीवब्रह्मैक्यलक्षणमिति ॥
तदपि द्विविधं प्रोक्तं साधनेन समन्वितम् ।
द्वितीयं तद्विनिर्मुक्तमाद्यं गुरुकृतं पुरा ॥
द्वितीयमपि शिष्यस्य गुरुवाक्यस्य पालनात् ।
आद्यंवेधादिदीक्षेभ्यस्त्रिपुण्ड्रस्यापि धारणात् ॥
रुद्राक्षधारणाच्चापि पंचाक्षरजपादपि ।
मुख्यालिङ्गधृतेश्चापि दहराकाशमण्डले ॥
बहिर्दहरदेशेच हृदये लिङ्गधारणात् ।
क्रमागतेन मार्गेण कृताङ्गन्यासवान् गुरुः ॥
सकलीकृत्य देहं स्वं प्रविलापपुरः सरम् ।

तत्तदीशाक्षरं न्यस्य तत्तत्स्थानेषु बुद्धिमान् ॥
अङ्गतत्त्वानि यान्याहुर्लिङ्गतत्त्वानि यानि च ।
सामरस्यं नयाञ्ज्ञात्वा शास्त्रोक्तेनैव वर्त्मना ॥
मन्त्रैरेतैश्च भूतैश्च वाक्यैर्महावाक्यैरहस्यकैः ।
पंचाक्षरार्थतत्त्वमसमर्थं शिष्यस्य बोधयेत् ॥
नमः शब्देनाङ्गतत्त्वं लिङ्गतत्त्वं शिवेति च ।
आयेत्यैकार्थबोधः स्यादितिमन्त्रार्थबोधकः ॥
गुरुर्मनो निजं शिष्ये निधाय हितचेतसा ।
अप्राकृताभ्यां चक्षुर्भ्यां पूर्णदृष्ट्या विलोकयेत् ॥

शिष्योऽपि–

गुरोःशिवस्यचाभेदं ज्ञात्वा स्वस्य गुरोस्तथा ।
अभेदभावनां ज्ञात्वा लिङ्गतत्त्वाङ्गतत्त्वयोः ॥
अभेदभावनाकार्या व्युत्क्रमेण स्वयंगुरोः ॥

इत्यादि प्रतिपाद्याग्रे न्यासादिकं ददर्श ततो वीर-
शैवसिद्धान्तमित्थमाह तत्रैव–

अत्रायमेव राद्धान्तो वीरशैवमुदावहः ।
लिङ्गाद्धृदयदेशात्तु धृतादमृतवाक्यतः ॥

त्वमस्मिन्त्वमिति वाक्येच ज्योतिश्चरणसूत्रतः ।
ज्योतिर्लिङ्गंच गुरुणा दत्तं समरसात्मना ॥
दृष्ट्वा दृष्ट्वा प्रतिदिनं ध्यात्वा ध्यात्वा पुनःपुनः ।
लिङ्गाङ्गयोस्तदुभयोः सामरस्यं फलात्मकम् ॥
तथा ब्रह्मविदाप्नोति श्रुतौ लिङ्गविदुच्यते ।
वेदनं नामलिङ्गस्य धारणं प्रतिपादितम् ॥
अनावृत्तीतिसूत्रेच ह्ययमर्थः स्फुटीभवेत् ।

इत्यादिना सम्यगुपपादितम् ॥

कामिकागमेऽपि—

शिवएव भवेल्लिङ्गमात्मैवाङ्गं भवेत्खलु ।
तयोः शिवात्मनोः सम्यग्योगः संयोग एवहि ॥
संयोग एव सायुज्यरूपा मुक्तिर्नचापरा ।
एकेन जन्मना मुक्तिर्वीराणां च महेश्वरि ॥
अन्येषामपि शैवानांमुक्तिर्जन्मत्रयेणत्विति कथितम्

शाङ्करसंहितायान्तु—

तत्वं पदार्थे लिङ्गाङ्गरूपे अन्योन्यविरुद्धके ।
उपाधिकृतवाच्यार्थंत्यक्त्वा सच्चित्सुखात्मकम् ॥

लक्ष्यार्थमविरुद्धं यच्छिवस्तीदति या मतिः ।
सा सम्बन्ध इति प्रोक्तो वेदान्तागमवेदिभिः ॥

अपिचतत्रैव—

यो मायोपाधिकः शम्भुर्लिङ्गरूपी सदाशिवः ।
सोऽविद्योपाधिको भूत्वा भवत्यङ्ग स्वरूपवानिति

एतदनुसर्वविषयमनुभवसूत्रे तावदेवंवक्ष्यते—

लिङ्गं तत्पदमाख्यातमङ्गं त्वं पदमीरितम् ।
संयोगोऽसिपदं प्रोक्तमनयोरङ्गलिङ्गयोः इति ॥

एवं स्कान्दादिपुराणेषु वातुलाद्यागमेषु च विस्ताररूपेण शङ्कासमाधानौ कृतवन्तः । ननु ब्रह्मास्मीत्यत्र कथं लिङ्गाङ्गसम्बन्धिज्ञानं संभवतीति चेदुच्यते । तत्रकोऽहमिति शिष्येण पृष्टे । प्रश्नोत्तरं गुरुणा हस्तमस्तकसंयोगरूप वेधादीक्षया योगाङ्गापरनामक कारणाङ्गावच्छिन्नेचजीवे भावलिङ्गं सम्बध्य भोगाङ्गापरनामकसूक्ष्माङ्गावच्छिन्ने च जीव मनुदीक्षयाप्राणलिङ्गंनियुज्य त्यागाङ्गापरनामक स्थूलांगावच्छिन्ने च जीवे क्रियादीक्षया इष्टलिङ्गं संयुज्य तत्वमसीति दत्तम् । तच्छ्रुत्वा शिष्यः ॥

लीनं गच्छति यस्मिन् सा माया दुर्घटकारिणी ।

तल्लिङ्गमिति सन्मात्रं रूप्यते पारमार्थिकैः ॥

एतत्कारणादेव लिङ्गरूपत्वमिशितुरिति शङ्कर संहितावचनानुसंधेन मायोपाधिकलिङ्गरूपशरीरावच्छिन्नब्रह्म तत्पदवाच्यः ॥

अमिति ब्रह्मसन्मात्रं गच्छतीति गमुच्यते ।
रूप्यतेऽङ्गमितिप्राज्ञैरङ्गतत्वविचिन्तकैः ॥
तस्मादङ्गस्वरूपोऽसौ जीवस्संसारवृत्तिभाक् ।

इति वचनानुसंधेन हराद्युपासनाविशेषैराविद्यापटलध्वंसे । अम् । ब्रह्माणं पराशिवं गच्छतीत्यङ्गम् । त्वंपदवाच्यो जीवः। अङ्गपदस्य शरीरवाच्यत्वेऽपि। "यस्यत्रात्मशरीरम्" "यस्याव्यक्तं शरीरं" इति ॥ श्रुत्या ब्रह्मणो जीवशरीरकत्वेनाङ्गं शरीरभूतं। जीवस्त्वंपदवाच्यः ।

लिङ्गाङ्गरूपयोर्योऽसौ संयोगः शिवजीवयोः ।
एतत्स्वरूपं सुदृढः सम्बन्ध इति सस्मृतः ॥

इति वचनेन सम्यग्योगः संयोग इति व्युत्पत्या च जीवब्रह्मैक्यापरनामकनीरनीरसंयोगवदविभज्यसंयोगोऽसिपदवाच्यः। अथवा तत्पदवाच्यः लिङ्गाधिष्ठितशिवः । ब्रह्मशरीरभूताङ्गपदवाच्यसकलचराच-

त्वमर्थस्तत्त्वंपदार्थः अनयोरर्थविभज्ययोगोऽस्मि पदार्थेनेति बुध्या । लिङ्गाङ्गपदार्थाभिन्नयोस्तत्त्वं पदवाच्यार्थयोर्विरुद्धधर्माभ्यामेन अभेदासम्भवात् तत्त्वंपदलक्ष्यार्थयोरेव अभेद इति वाच्यम् । तदनन्तरमहं ब्रह्मास्मीत्यखण्डमहावाक्यार्थमनुभवन् जीवन्मुक्तो भविष्यति ॥

सोऽहमित्यब्रवीद्देही गुरुं परमकारणम् ।
गुरुस्तत्त्वमसीत्याह मत्यार्थं करुणानिधिः ॥

अत एव छान्दोग्योपनिषदि श्वेतकेतुं प्रत्युद्दालक आह ॥ "श्वेतकेतो तत्त्वमसि" ॥ इति ॥

अस्मिन्नर्थे सूतसंहितायां स्कान्दे शङ्करसंहितायामपि च—

लिङ्गं किमङ्गमिति किं च सम्बन्धः कोऽयमेतयोः । लिंगाङ्ग सम्बन्धपदान्येवमेव विचिन्तयेत् ॥ लिंगरूपो महादेवः सच्चिदानन्दलक्षणः ।
अङ्गरूपो हि जीवात्मा भवभावानियन्त्रितः ॥

॥ इति ॥

वातुलेतु-

तत्पदेनोच्यते मह्निर्लिङ्गरूपःसदाशिवः ।
त्वंपदेनाङ्गरूपो हि जीवःसंसारलक्षणः ।
त्वमर्थोऽङ्गस्वरूपो यःसोऽहंशब्दार्थएवहि ।
त्वमहंपदलक्ष्यार्थश्चिद्रूपः परमेश्वरः ।
त्वमहंपदलक्ष्यार्थो जीवात्माचाङ्गरूपकः ।
अशिवश्चेत्सदानन्दस्ततो नैव विलोकयेत् ॥
जगच्चराचरंयत् तत्वं पूर्णं चिदात्मकम् ।
शुद्धं तदङ्गरूपोहि तत्वमर्थो न संशयः ॥
तत्वं पदार्थलिङ्गाङ्गरूपाऽन्यान्यविरुद्धकम् ।
उपाधिकृतवाच्यार्थं त्यक्त्वा सच्चित्सुखात्मकम् ॥
लक्ष्यार्थमविरुद्धं यच्छिवं तदितियामतिः ।
सासम्बन्धइतिप्रोक्ता वेदान्तागमवेदिभिः ॥

सामरस्यविषयं सूतसंहितायां स्कान्दे शङ्करसंहितायामुपरिभागे वीरमाहेश्वरप्रशंसायामेवं विचारितम् ॥

यतः कुताश्चिदानीय शास्त्राण्येवं विचारयेत् ।
शिवोदितानि लिङ्गाङ्गसम्बन्धार्थकृतानिच ॥

कोऽहंसोत्र कथंकेन ममाङ्ग प्रतिपन्नवान्।
इत्यालोच्यधियापश्चाच्चित्तमन्त्वं विचारयेत्॥
किंस्वित्तत्वं शरीरं स्याद्भूतग्रामाविनिर्मितम्।
जडमन्त्वममुक्तंनमन्त्वादवुद्धिमुपेप्यते॥
विनश्येत्तन्ननन्त्वंस्यान्नेन्द्रियाणि न धीमनः।
नाहंकृतिर्नचित्तं स्यान्नमाया नच कर्मच॥
इतिनिश्चित्य मनसा यदुक्तं गुरुणा पुरा।
कृत्वा लिङ्गाङ्गसम्बन्धं तदेव विमृशेत्सुधीः।
लिङ्गरूपो महादेवः पूर्णश्चेतन्यलक्षणः॥
भाति यःसोऽङ्गरूपोऽहं जीवात्मास्मि नचापरः।
यो भातिचाङ्गरूपोहं जीवात्मा परमात्मनः॥
सोऽयमात्मा महादेवो लिंगरूपो महेश्वरः।
योमायोपाधिको देवो लिंगरूपी सदाशिवः॥
सोऽविद्योपाधिको भूत्वा भवत्यङ्गस्वरूपवान्॥
तत्पदेनोच्यते लिङ्गं त्वंपदेनाङ्गमीरितम्।
अनयोरैक्यभावोऽयं सम्बन्धोऽसिपदेनच
इतिवाक्यानुसन्धानं भासते यस्य संततम्।

गुरूपदेशाल्लिङ्गाङ्गसम्बन्धीति सउच्यते ॥
एवंलिंगांगसम्बन्धभावना यस्य विद्यते ।
स योगी सच सर्वज्ञो जीवन्मुक्तः स उच्यते ॥
लिङ्गाङ्गपदवाच्यार्थं हित्वासम्यग्धिया पुनः ।
लक्ष्यार्थं लक्ष्ययित्वा तं सोऽहमेवेतिचिन्तयेत् ॥

लिङ्गाङ्गपदसम्भूतसम्यग्धीजन्ममात्रतः ।
अविद्यासहकार्येण नाभूदस्ति भविष्यति ॥
लिङ्गं भवो भवान्यङ्गमनयोः सङ्गतिः परा ।
आनन्दरूपिणी यासा सम्बन्ध इति कथ्यते ॥

अङ्गं भक्तिः शिवो लिङ्गं यया भक्त्यावगम्यते ।
इतिविज्ञाननिष्पत्तिर्या सा सम्बन्ध उच्यते ॥
अङ्गं शक्तिरितिप्रोक्ता शक्तिमल्लिङ्गमुच्यते ।
अनयोरैक्यविज्ञानं सम्बन्धइति कथ्यते ॥
लिङ्गं शिवो नियन्ताङ्गं प्रपंचः ससुरासुरः ।
तस्मिंस्तस्य लयस्थानं सम्बन्ध इति गीयते ॥
अतो लिङ्गाङ्गसम्बन्धपदार्थोऽस्मि शिवात्मकः ।
सच्चिदानन्दसम्पूर्णस्वरूपोऽहमितिस्मरेत् ॥

एवं लिङ्गांग सम्बन्धपदानामर्थमुत्तमम् ।
लब्ध्वा गुरूपदेशाद्यः सोऽयं लिङ्गाङ्गसङ्गवान् ॥
लिङ्गाङ्गसम्बन्ध पदार्थमेवं निश्चित्य सच्चित सुख-
पूर्णरूपम् । गुरूपदेशादपि तर्कतो यो लिङ्गाङ्गसङ्गं
कुरुते स योगी ॥ सङ्कल्पात्मकशिवलिङ्गधारणं सङ्ग
वर्जिततनु कुरुते यः । अङ्गजीवदहनं सर्वमिन्धं
सङ्गमङ्गतरलं प्रतेरस्मः ॥ प्राणरूप इति जीव
उच्यते लिङ्गरूप इति शंकरः स्मृतः ॥ यस्तदै-
क्यमितिवेदितानयोः प्राणलिंगविदसौशिवयोगी ॥
यस्यैतत्परमात्मवेदनमिदं लिंगांगसम्बन्धिनः
प्रत्यग्भाति पदत्रयार्थ कलितं शुद्धं सदानन्दकम्॥
स श्रीकरात्पदाब्ज भक्ति भरितः स्वान्तःपुमानुर्वरम्
त्यक्त्वा कर्मकलापमन्यविषयं वैनं निषिद्धं चरेत्
इत्यादि॥ वेदागमोपनिषत्मनिषादिनालिङ्गाङ्गसामर-
स्यबोधकमहावाक्यादिभिश्च लिङ्गधारणं वैदिकत्वेन
परिग्राह्यमित्यपिसिद्धं । इतिशिवम् ॥

——:✻✻✻:——

श्रीजगद्गुरुरेवणसिद्ध शिवाचार्योविजयतेतराम् ।

सद्योजातमुखोद्भूतः सद्योमुक्तिफलप्रदः ।
वीरसिंहासनाधीशो रेवणार्यो विराजते ॥

## अथ शक्तिविशिष्टाद्वैतनिरूपणम्–

शिवएको ध्येयःशिवंकरःसर्वमन्यत्परित्यज्य ।

इत्यादिभिः शिवएकएवध्येयः इतिप्रागुपपादितं किल । तथाच सचशिवः पराशक्त्याऽविनाभावेन वर्त्तते । अतः शक्तिविशिष्टः। साशक्तिश्च शिवादवि-भज्यमाना पुष्पगन्धवदुज्वला आस्ते । अपिच ब्रह्म-ण्यपृथक्स्थितशक्तयएव सकलं जगत् । शक्तिमानेव भगवान्शिवः।जगद्रूपशक्तेः शक्तिविशिष्टशिवस्यचा भेदः । यथाग्नौ स्फुलिङ्गाः। अथच अयस्कान्तमणि-स्थिताकर्षणशक्तिरिवशिवादभिन्नाशिवा ॥ अतः

शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ।
शक्तिस्तु शक्तिमद्रूपाद्व्यतिरेकं नगच्छति ॥
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ।
शक्तिशक्तिमतोर्यस्मादभेदः सर्वदास्थितः ॥
अतस्तध्दर्मधर्मित्वात् पराशक्तिः परात्मनः ।

तत्रैकैवाद्विका शक्तिर्यथानेका विभाव्यते ॥
शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृत्कुम्भादिकं यथा ॥
परास्य विविधा शक्तिः प्रबोधानन्दरूपिणी ।
एकानेकस्वरूपेण भाति भानोरिव प्रभा ॥ इति

वायवीयसंहितायामुक्तम् ॥

श्रुतावपि—

तदात्मशक्तिं स्वगुणैर्निगूढां परास्यशक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया च एको हि रुद्रो न द्वितीयायतस्थुः ॥ य इमाँल्लोकानीशत ईशनीभिः इति ॥

सर्वथा सर्वशक्त्या सर्वान् शक्तिविशिष्टः शिव एवो-द्धरति ॥ अतः कैवल्योपनिषदि—

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमस्वराट् । स एव विष्णुः

सप्राणः सकालोऽग्निः स चन्द्रमाः ॥ यद्भूतं यच्च भव्यामित्युक्त्वा ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥

इतीतरनिषेधपुरस्सरं मुमुक्षूपास्यः उमासहायस्त्रिलोचन नीलकण्ठपदवाच्यः साम्ब इति श्रुतत्वाच्छक्तिविशिष्टः शिव उपास्यः । अपिच स शिवो नाम रूपवन्नित्यं शक्तिसम्बद्धः ॥ इति मत्वैव श्रीशङ्कराचार्यैः—

कलाभ्यां चूडालङ्कृतशशिकलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतुमे ॥ शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदिपुनर्भवाभ्यांमानन्दः स्फुरदनुभवाभ्यां नतिरियम् ॥ इति ॥

नमस्कारात्मकं मङ्गलमाचरितं शिव । मुद्दिश्य ।

वेदासिद्धं महादेवं साम्वं चन्द्रार्धशेखरम् ।
लिङ्गे दिने दिने देवं शिवरुद्रादि संज्ञकमिति ।

सूतसंहिता शङ्करसंहितादिषु भगवता बादरायणेन शक्तिविशिष्टाशिवः स्तुतः । सचशिवो भगवान् शिवया शब्दार्थवन्नित्यसम्बन्धवान् ।

श्रीमदप्पय्यदीक्षितेन—

परस्परतपःसम्पत्फलायितपरस्परौ ।
प्रपंचमातापितरौ प्राञ्चौ जायापती स्तुमः ॥

अतः कालिदासेन च

वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इति मंगलमाचरितम् ॥

वेदरूपापरशक्तिर्वेदार्थस्तु महेश्वरः

इत्यागमेप्यपि—

एवम् ॥

देहार्धयोगः शिवयोः स श्रेयांसि तनोतु वः ।
दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते ॥

इति भोजदेवेन च सङ्कलितम् ॥

तथा—

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः

इति परिभाषेन्दुशेखरे नागेशेन ॥

एकैकवस्तुतः शैवी या शक्तिर्निर्मला परा ।
अविनाभाविनी शम्भोः शुचेरुष्णत्ववत्प्रभोः ॥

सिद्धान्तशिखामणौ—

श्रीनाथः सोममूर्तिर्जयति । ध्यात्वा साम्बं क्षणं देवम् ॥ इति ॥

शक्तिविशिष्टःशिवोनुतः । श्रीमदप्पय्यदीक्षितैः—

ख्याताः कोट्यो नवाष्टादशपरिमिताः स्थाणुवैकुण्ठवेधाः । शक्तीनं यत्कलांशास्त्रिभुवनविषयाः शंकरस्यैव भोग्याः ॥ या विख्याता कृपाब्धिः श्रुतिशिरसि परब्रह्मविद्याप्रदात्री । साहित्यं सा भवानी भजति नियमतः शङ्करोपासनासु ॥

इति जगन्मातुरुमायाः शिवेन सहोपासनानियमो दर्शितः ।

अपिच—

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति ।

श्वेताश्वतरोपनिषन्मन्त्रेष सोम उपास्य इति प्रदर्शितम् ।

अस्मिन्नेवार्थे शिवपुराणे—

तस्मात्सहजया शक्त्या हृदि पश्यन्ति ये शिवम् ।

तेषां शाश्वतिकीशान्तिर्नेतरेषामितिश्रुतिः । इति
वागतपुराणे-

सर्वासां भगवानरुद्रः सर्वरूपत्वात्पतिर्भवेत् ।
यावन्त्यस्तामहाशक्त्यस्तावद्रूपाणि शंकरः ॥
कृतवांस्तास्तु भजते पतिरूपेण सर्वदा ।

इत्युमासमन्वायः सेव्यइतिसूचितम् ॥
केचित्तु केवलब्रह्मवादिनो वेदान्तिनःशैवसंपथा वान्ता
मात्रभावेन कार्यन्तेनथाऽद्वैतिनश्चर्चायन्ते ( भृशंभ्र-
रन्तीत्यर्थः ॥

शक्तिविशिष्टः शिवएवसंसारानलसन्तप्तजीवकोटीनु
द्धर्तुंसमर्थः ननु विष्णवादयः । तेऽपि जीवकोटिप्र-
विष्टाएव " ब्रह्माधिपतिः " ब्रह्मादयः पशवस्तेषा
मधिपतिरीश्वरइति श्रुतिः ॥

"ईश्वरः सर्वभूतानाम्" इति श्रुतेर्विष्णवादिसर्व-
जीवनियामकइतियावत् ।

एकोविष्णुर्महद्भूतं प्रत्यग्भूतान्यनेकशः
इत्यादिश्रुतिस्मृतिषु विष्णवादीनां भूतत्वोपदेशाच्च ।
अथच रामावतारेदो दारापहरणादिक्लेशसन्तप्तो हरिः
स्वयंसंसारसागरनिमग्नःसन् अन्यान्कथंतारयेत् ।

अपिचावतारनिवृत्त्यर्थं दशावतारेषु लिङ्गप्रतिष्ठाराधनेनैव मुक्तो बभूव ॥

अतोऽत्रप्रमाणांविंबागमे–

द्वारावत्यांचकूर्मेशं लङ्कायां मच्छकेश्वरम् ।
वाराहेशं वृद्धगिरौ काश्यां बौद्धेश्वरंतथा ॥
तीर्थे कपिलसंज्ञेऽस्मिन् परशुरामेश्वरं तथा ।
महाक्षेत्रेऽपिवामेशं वामनेन प्रतिष्ठितम् ॥
कृष्णेश्वरंहिमगिरौ रामेशं सेतुबन्धने ।
अहोबले नृसिंहेशं प्रतिष्ठाप्य हरिःस्वयम् ॥
पूजयामास सद्भक्त्या ह्यवतारनिवृत्तये । इति

ब्रह्मापि स्वशिरश्छेदेन चतुर्मुखइत्यन्वर्थंनामलेभे । एते ब्रह्मादयो मरणधर्माणः अतो जीवकोटिप्रविष्टाः एतान्हित्वा मृत्युंजयः मसांबएव सर्वथोद्धर्तुंसमर्थ इति । सर्वे तमेवसाम्बं शरणं जग्मुः । आध्यात्मिकादिदुःखत्रयात्यान्तिकनिवृत्तिर्भवानीपतिर्नीलकण्ठेनैव भविष्यति नान्यैः ॥

ब्रह्मापि–

महादेवाय सोमाय पशूनां पतये नमः ।
वेदसारं शिवं देवं प्रलयाम्बुनिधौस्थितम् ॥

नमामि शाश्वतत्वेन स्थितं लिङ्गस्वरूपिणम् ॥

इत्याद्यनेकशास्त्रैः प्रस्तुत्य तत्त्वं शरणं प्राप । विष्णुरपि सर्वदाराध्य तत्त्वतो लिङ्गं च जगत्त्रयात्मकं स्तुत्यादिसाम-र्थ्यं प्राप्तवान् ।

अत्र ब्रह्मकैवर्ते—

शैवं समभ्यर्च्येह लिङ्गमादौ शिलामयं चारुहरि-स्तु भक्त्या । सुदुर्लभं वैष्णवमाद्यमग्र्यमवाप्तवाने-षपरं पदं यत इति ।

आदित्यपुराणे—

शैवं लिङ्गं महाविष्णुर्भक्त्या शुद्धं शिलामयम् ।
चारुचित्रं समभ्यर्च्य लब्धवान् परमं पदमिति ।

पुनश्च शिवरहस्ये—

इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन सर्वेशं सनातनम् ॥
यज्ञकर्ता च देवेन्द्रः सृष्टिकर्ता च वाक्पतिः ।
अहमेव जगत्कर्ता मम कर्ता महेश्वरः ॥ इति ॥

कूर्मपुराणे भगवद्विष्णुनिवाक्यम् ।

भारतेऽनुशासनिकपर्वणि भगवान् व्यासोऽप्ये-

वमुवाच—
ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् ।
स्वर्गाधिपत्यमिन्द्रस्य शिवपूजा विधेः फलमिति
रुद्र यत्ते जनिम चारुचित्रं पदं यद्विष्णोः परमं
पदंन्यधायीति श्रुतिश्च ॥
स्कान्दे कालिकाखण्डे भगवान् विष्णुः स्वयमेवमु
वाच व्यासम्प्रति—

अवलेपनदुर्बुद्धे त्वया दुर्भाषितं महत् ।
ममापिनाथमाक्षिप्य शिवं मां यत्प्रशंससि ॥
अत्र मे वचनं व्यास शृणु सत्ययथार्थवत् ।
यच्छ्रुत्वा सर्वभूतानां शिवएव भवेन्मतिः ॥
कर्ताहं सर्वजगतां ममकर्ता महेश्वरः ।
तस्यदेवाधिदेवस्य कर्ताकोऽपि नविद्यते ।
यज्ञकर्ताच देवेन्द्रो वेदकर्ताच वाक्पतिः ।
अहमेव जगत्कर्ता ममकर्तामहेश्वरः ॥
तस्यदेवाधिदेवस्य कर्ताकोऽपि नविद्यते ।
देवतानामहंदेवो देवोऽस्माकंमहेश्वरः ।
शिवस्य पूज्यते लिङ्गं सर्वैर्देवासुरैर्नरैः ।

शिवेन पूजितः कोवा वदन्तु प्रतिवादिनः ॥
स्वनाम्ना ब्रह्मणा लिङ्गं मया कृष्णेश्वरं मुने ।
सर्वापत्तिनाशार्थं वाराणस्यां प्रतिष्ठितमिति ॥

अपिच कूर्मपुराणे—

विद्भिर्मुनिभिर्वेद्यो यस्त्वमेव जनार्दनः ।
सम्प्राप्तोऽद्य मया देव किंतत्परमं पदमिति ।

पृष्ठवन्तं प्रभाकरस्प्रति भगवद्वचनम्—

अपरञ्च पदं राजन् परमं च पदं मम ।
भोगैश्वर्यप्रसक्तानामपरं प्राप्यते पदम् ॥
विरक्तानां मुमुक्षूणामात्यन्तिकल्यार्थिनाम् ।
भस्मज्योतिर्दिदृक्षूणां शिवं तं सोमसीश्वरम् ॥
अपरागवर्तिनां साक्षात्परमं पदमिष्यते ।

इत्यादिप्रमाणकलापसहायः सोमसूर्यापास्यः भगवान्भर्ता। अपवर्गप्रदाताच नान्य इति निश्चिनुमः। अथवा विष्णुस्तवकेनापि नास्माकं विरोधः। कुतः। सोऽपि विष्णुरपि शक्त्यंशवान् कूर्मपुराणवचनान्येवात्रप्रमाणानि। तथाच तत्र भगवांश्चन्द्रशेखरो मन्दरशिखरिण्युमासंरक्षणार्थं विष्णुं नियुज्य देवदारुवनं प्रति गत्वा तत्र तपस्यतोऽनुगृह्य मन्दराद्रिं

प्रत्यायय्यौ । प्रत्यागत्य सिंहासनासीनं नमेकदा ।

प्रणम्यदेवमीशानं पृष्टवन्त्यो वराङ्गनाः ।
कस्त्वं विभ्राजसे कान्त्या कथं वाला रविप्रभा ॥
कोवायं भाति पुरुषः पङ्कजायतलोचनः ।

इति देवपृष्टे तत्प्रश्नस्य श्रीशिवदत्तवचनान्येतानि ।

अथनारायणो गौरी जगन्माता सनातनी ।
विभज्याहंस्थितो देवः स्वात्मानं परमेश्वरः ॥
नसमे विदुःपरं तत्वं देवाद्यानमहर्षयः ।
एकोऽहं देव विश्वात्मा भवानी विष्णुरेवच ॥
अंहहिनिष्क्रियो दाता केवलो निष्परिग्रहः ।
मामेव केशवं देवमाहुर्देवीमथाम्विकाम् ॥ इति॥

एतद्वचनैर्विष्णोः शक्त्यंशत्वं स्पष्टंप्रतीयते ।
अपिच पुत्रार्थं कैलासाद्रौ तपश्चरणमाचरते विष्णवे शिवेनाभिहिते वरे दत्ते तदानीं दत्तगौरीवचनमुक्तरीत्या ।

वत्स जाने तथानन्तां निश्चलां सर्वदाच्युत ।
अनन्यमीश्वरेभक्तिमात्मन्यपि च केशव ॥
त्वं हि नारायणः साक्षात् सर्वात्मा पुरुषोत्तमः ।

प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः ।
पश्य त्वमात्मनात्मानं समस्तं परमं पदम् ।
नावयोर्विद्यते भेदमैक्यं पश्यन्ति सूरयः ॥ इति ॥
प्रतिपादितम् ॥

विष्णुं योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु
इति श्रुतिश्च ।

अथ च सङ्कर्षणमति भगवच्छेषेण विश्वरूपे प्रदर्शिते

किमेतद्भगवद्रूपं सर्वाङ्गं विश्वतो मुखम् ।
काचैषा भगवत्पार्श्वे राजमाना व्यवस्थिता इति

सङ्कर्षणेन विचार्यमाणे शिवेन तत्स्वरूपप्रभावमु-
क्त्वा ततः ॥

स एषा परमा माया प्रकृतिस्त्रिगुणात्मिका ।
प्रोच्यते मुनिभिः शक्तिर्जगद्योनिः सनातनी ।
स एव मायया विश्वं व्यामोहयति विश्ववित् ॥
नारायणः परो व्यक्तो मायारूपमिति श्रुतिः ।

सैवेयं समस्तशक्तिर्नारायणरूपेण जगन्मोहयतीति स्प-
ष्टमुक्तम् । पुनश्च तत्रैव काञ्चीपुरीं तदधिपराजानं
तस्य महिषीं तयोरिष्टदेवताराधनं च वर्णयि-
त्वा ततः ॥

एवं देव्यात्मना स्वेन परमेण जनार्दनः ।
दम्पत्योरेककार्यत्वादेक एव द्विधार्चितः ॥इति॥

दम्पतिभ्यामाराधितयोर्गौरी नारायणयोरैक्यं स्फुटम् एवं हरिवंशे पारिजातसंहितायां पारिजातप्रार्थनार्थं भगवता निसृष्टार्थदूततया इन्द्रं प्रति प्रेषितेन नारदेन नानाविधैरुपायैः प्रार्थित इन्द्रः । किन्तु पारिजातं यदादातुं नैच्छत्तदा तत्प्रतिरहसि भगवन्महिमप्रख्यापनार्थानि नारदवचनानि तावत्पठ्यन्ते ।

य एको विश्वमध्यास्ते प्रधानं जगतो हरः ।
प्रकृत्यायं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः ॥
तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः ।
तस्यात्मा प्रथमोदेवी विज्ञः सर्वस्य धीमतः ॥
प्रकृत्या प्रथमो भाग उमादेवी यशस्विनी ।
व्यक्तः सर्वमयो विष्णुस्त्रीसंज्ञो लोकपावनः ॥

इत्यादिप्रमाणैः शक्त्यंशो विष्णुरितिबाढं निश्चितं । अतः शिवनामावलौ " विष्णुवल्लभाय नम " इत्युक्तम् । नीलकण्ठविजयादिषु बहूनि सान्ति प्रमाणानि । विस्तारभयाद्दिङ्मात्रं प्रदर्शितम् । सा च भगवती शक्तिमातातु शिवादविभज्यमाना

पुस्तगन्थवद्दृश्यताऽस्ते किन्तु तत्तत्कार्यवशाद्नेक-
नामवर्णा रूपवर्णा च भवति सैवशाक्तिः ।
वाराहपुराणे–

नवकोट्यस्तु चामुण्डा भेदाभिन्नाव्यवस्थिताः ।
या रौद्रा तामसी शक्तिःसा चामुण्डा प्रकीर्तिता ॥
अष्टादशतथाकोट्यो वैष्णव्या भेद उच्यते ।
या सात्तु राजसी शक्तिः पालिनी सैववैष्णवी ॥
या ब्रह्मशक्तिः सत्वस्य मामत्वा वै प्रकीर्तिता ।
एतेषु सर्वभेदेषु पृथगेकैकशो धरे ॥ इति ॥

एकैवशक्तिः परमेश्वरस्य भिन्नाचतुर्धा विनियो-
गकाले । भोगे भवानी पुरुषेषु विष्णुः कार्येषु
काली समरेषु दुर्गा । इत्यादिपुराणवचनैश्च ।

परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-
बलक्रिया चेति श्वेताश्वतरोपनिषद्वाक्येनापि
बहुधा सेति सिध्यति ॥
एतद्विषयं क्रियासारकारैरेवं प्रतिपाद्यते–

यामामनन्ति नव शङ्कर धर्मदारान्ध्वर्यवः
सहजसिद्धतया स्वसारम् ॥ आथर्वणाय उपसृ-

ष्ठतया भवन्तं ध्यातव्यमाहुरपहाय पितामहादीन् ।
एकश्रुतोऽपि परमेश्वर सद्वितीय मन्त्राय याप्युपदिशन्ति पुनः पुनस्त्वाम् । तस्याः प्रभावमति वाङ्मनसा शिवायाः कार्त्स्न्येन वक्तुमनलं कमलासनोऽपि ॥ इत्यादिवचनैरन्यैः शिवशक्त्योश्च वर्णनात् ।

द्वौ पदार्थाविति प्राप्ते तयोरैक्यं प्रतीयते ॥
अथ शक्तेश्च बहवो भेदास्ते चोपवर्णिताः ।
क्वचिच्छक्तिपुराणादौ जगतां ललिता परा ।
दुर्गा क्वचित् क्वचित्काली क्वचिदन्येति शक्तयः ॥
एकैव परमा शक्तिस्तद्भेदाः सर्वशक्तयः ॥
शक्तिरूपद्वयं पुंस्त्वं स्त्रीत्वं चैव प्रमाणतः ।
पुंरूपं विष्णुरूपं स्याच्छक्तिरूपमनेकधा ॥
वर्णितं त्वयमेवार्थो वेदवेदार्थकोविदैः ।
साक्षाच्चिच्छक्तिरूपा तु पुष्पगन्धवदुज्वला ॥
द्वौ भेदौ तत्र चिच्छक्तेरुमानारायणात्मकौ ।
स्फुटं कूर्मपुराणेषु शिवेनैवोपवर्णितम् ॥ इति ॥

कूर्मपुराणवचनानुसारेण विष्णोः शक्त्यंशत्वं सम्य-
गुपपाद्यात्र एवमुक्तम् ।

इत्यादि वचनैर्विष्णोः शक्त्यंशत्वं प्रतीयते ।
तस्याः शक्तेः शिवस्यापि परस्परमभिन्नता ॥
परमं पदमित्येव स्फुटीकृतमथ श्रुतः ॥
कथिता विष्णुरूपस्य पारम्पर्येणचाभिधा ।
परमं पदमित्येवमेकत्वं नातियामकम् ॥
छित्त्वं नश्यते यस्माद्भेदश्चापि भवेद्भ्रमः ॥
शक्त्यन्तर्भाव एवास्य विष्णोरित्युपवर्णितम् ॥
शक्त्यंशविष्णोरंशास्ते रामकृष्णादयोऽखिलाः ॥
अयं पौराणिकः पक्षः श्रुतिपक्षस्तु वर्ण्यते ॥इति॥

अपि चैवमेतन्नामश्रुत्यनुसारेण श्रीमच्छाङ्करशैवमतस्था
पनाचार्यभगवत्पादा जगद्गुरुकरवीरसिद्ध मठस्थ
सिद्धेश्वराम पण्डिताराध्य विश्वाराध्यशिवाचार्या
विष्णोः शक्त्यंशत्वमूचुः ।

सामश्रुतौ—

शिवस्य शक्तिर्विनियोगकाले चतुर्विधाभूच्छिव-
सत्प्रसादात् ॥ भोगे भवानी पुरुषेषु विष्णुः क्रोधे

चकाली समरे च दुर्गेति ॥

एतच्छ्रुतिवाक्यमवलम्ब्य स्कान्दे व्यासोऽप्येव-
मुवाच-

प्रकृतिस्त्वं पुमान्रुद्रस्त्वयि तद्वीर्यमाहितम् ।

तन्नाभिपङ्कजाज्जातः पंचवक्त्रपितामहः॥इति ॥

अपिच शक्तिशक्तिमतोरभेदनियमात् । शक्तधर्माः
शक्तौ सम्भवन्तीति न्यायाच्च । एतन्नियमन्यायानु-
सारेण वासुदेवः पराप्रकृतिर्गीतायामपि शिवस्य
शक्तत्वेन विष्णोः शक्तित्वेन स्पष्टमुक्तवान् ।

एवं नमो रुद्राय विष्णवे मृत्युर्मे पाहि ॥ इति श्रुतौ ॥

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ॥ इति
स्मृतौ । उभाभ्यामर्थाच्छ्रुतिस्मृतिभ्यामनयोरभेद
व्यपदेशप्रदर्शनाच्च ।

नमः सोमायच रुद्रायचेति । नमो हिरण्यरूपाय
अम्बिकापतये उमापतये पशुपतये नमोनमः ॥

इति ऋग्वेदे ।

यजुर्वेदेऽपि-

"सोमः पविता जनिता मतीनां जनिता दिवो
जनितापथिव्याः जनिता अग्नेर्जनिता सूर्यस्य

जनिता इन्द्रस्य जनिताथविष्णोः" ॥ इति ॥
एतदुक्तिमनुसृत्यादित्यपुराणे

उमयासहितोदेवः सोम इत्युच्यते बुधैः ।
सएवकारणं नान्यो विष्णोरपित्र वै श्रुतिरिति ॥
वेदा ऊचुः—

न यथा कूर्मरोमाणि शृङ्गं न नरमस्तके ।
न यथास्ति वियत्पुष्पं न तथास्ति हरात्परः ।
विश्वतश्चक्षुरेशोऽयं त्रिशूली विश्वतोमुखः ।
जनकः सर्वभूतानामेकएव महेश्वरः ॥
नजानन्ति परं भावं यस्य ब्रह्मादयः सुराः ॥
अद्यापि न वयं विद्मः सदेवस्त्रिपुरान्तकः ॥

किं बहुना शक्ति विशिष्टः शिवएवाऽपवर्गफलप्रदो नान्यः । अतएव शक्तिविशिष्टाद्वैतमतं सर्वोत्कृष्टम् । अतस्तन्मतीया वीरशैवा उघेहति जयध्वनिंकुर्वन्ति अस्यार्थः कारणागमे—

उशब्दोऽयमुमासाक्षाद् घेशब्दस्तु महेश्वरः ।
शिवशक्तिसमायोगे ह्युघेशब्दः प्रकीर्तितः ॥

इति कृतः ।

यज्ञवैभवखण्डे—

प्रसादो मुक्तिदः साक्षाच्छिवात्सत्यादि लक्षणात्।
अम्बिकासहितादस्मात्सर्वज्ञा देवनान्यथे ति ॥

एवं मानवपुराणे—

अथ मुमुक्षुभिः सर्वैः साम्बः सर्वेश्वराह्वयः ।
परतत्वविशेषेण ध्येयएवसदा हृदि ॥ इति ॥

ध्येयएवेति एवकारेणाऽन्यव्यवच्छेदः ।

अतः पाराशरपुराणे—

विहाय साम्बमीशानं ये भजन्त्यन्यदैवतम् ।
ते महाघोरसंसारे पतन्ति परिमोहिताः इत्युक्तम्॥

वीरशैवाः शक्तिविशिष्टशिवचैतन्यं लिङ्गं धारयन्ति पूजयन्ति च । लिङ्गलक्षणन्तु—

पीठिका परमा शक्तिर्लिङ्गं साक्षात्परः शिवः ।
शिवशक्तिसमायोगाद्विश्वंलिङ्गंतदुच्यते । इति

कामिकागमे शिवभगवतोक्तम्—

लीनमर्थं हि पुरुषं नित्यं गमयतीत्यतः ।
शिवशक्त्योस्तु चिह्नस्य मेलनाल्लिङ्गमुच्यते ॥
लिङ्गं साक्षात्परं ब्रह्म पीठं शक्तिः परात्परा ।

तयोरन्योन्यसम्बन्धः सकलीकरणं मतम् ॥
इष्टलिङ्गमिदं तस्मात्परब्रह्मात्मवाचकम् ।
अभिव्यक्तायदाशक्तिर्जगदेतच्चराचरम् ॥
न व्यनक्ति यदाशक्तिर्नास्ति चैतच्चराचरम् ॥
तथैवास्मिन्निष्टलिङ्गे पीठंवा शक्तिरूपकं ।
नष्टमस्ति ततः प्राणान् सहसैव समर्पय ॥
इत्यादिवचनैः ।
अपिचकाशीखण्डेदेवीप्रतीश्वरवचनम् ।
ज्योतिर्लिङ्गं त्वमेवायं लिङ्गीचाहं महेश्वरः ।
तदेतदविमुक्ताख्यं ज्योतिरालोक्यतां प्रिये ॥
लिङ्गरवृत्तसमं पीठं दीर्घं विस्तारमेवच ।
तदर्धं गोमुखं विन्द्यादित्येतल्लिङ्गलक्षणम् ॥
लिङ्गाधिक्ये भवेन्मृत्युः शक्त्याधिक्ये धनक्षयः ।
लिङ्गशक्तिसमायुक्तं भोगमोक्षफलप्रदम् ॥
एतादृशप्रमाणानुसारेणोक्ततल्लक्षणलक्षितशक्तिवि-
शिष्टशिवचिह्नं लिङ्गं धारयामः पूजयामश्च ॥
बृहदारण्यकोपनिषदि-
यदूर्ध्वं याज्ञवल्क्यं यदिवियदर्वाक् पृथिव्या यद-

न्तरा द्यावा पृथिवी इमेतद्भूतंच भवच्च भविष्यं त्याचक्षते । कस्मिंस्तदोतं च प्रोतंच ॥ इत्यां गार्ग्या पृष्टो याज्ञवल्क्यउवाच–

आकाश एतदोतंच प्रोतंचे ति ।

कस्मिन्नुखलु आकाशओतश्चप्रोतश्चे ति ॥

पुनस्तयापृष्टेन तेन "एतत्द्वैतदक्षरं गार्गि ब्राह्मणाअभिवदंति" ॥ इत्यादिना अक्षरशब्दितं सर्वज्ञत्वादिविशिष्टं शिवं ब्रह्म प्रतिपाद्य "एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे" त्युत्तरमभिहितम् । ततस्तत्राऽऽकाशशब्देन नभूताकाशः तस्यपरिच्छिन्नस्य प्रतिकल्पंभिन्नस्यच सर्वदेशकालवर्तिसकलप्रपंचधारणायोगात् । अतो धर्मज्ञानरूपापराशक्तिरेव आकाशइत्यवसीयते । अपिच आसमन्तात् सकलप्रपंचप्रकाशयतीतिव्युत्पत्त्याच सैव ।

यस्यैषा परमादेवी शक्तिराकाशसंज्ञिता ।
अनंतैश्वर्ययोगात्मा महेशो दृश्यतेसहि । इति

कूर्मसूक्त्या तस्यास्तथावगमाच्च ।

एवंछान्दोग्योपनिषद्यपि–

र्णाः श्रुत्या शतरुद्रीयशतोपवर्णितत्वाच्छब्दार्थयोः परस्पराभेदभावना शक्तेराकाशशब्दितताया एव । विष्णोर्जीवकोटित्वं तस्योत्पत्तेः प्रसिद्धत्वात् । प्रदर्शितमेव विष्णुब्रह्मादीनां जीवकोटित्वमिति ॥
अत एव यजुरादिकाण्डे—

एक एव रुद्रो नद्वितीयायतस्थ आखुस्ते रुद्रपशुस्तंजुषस्तंजुषस्त्वेषते रुद्र भागः । सहस्वसाम्बिकया तं जुषस्व भेषजं गवेश्वाय पुरुषाय भेषजं अथो अस्मभ्यं भेषजं सुभेषजमिति ॥

एक एवेत्यत्राप्येवकारः । संसारदावानलपरिताप परिश्रान्त पशुपाशरूप रोगद्रावकः शिव एक एव नान्य इत्यन्ययोगव्यवच्छेदं बोध्यम् । मन्त्रस्यास्य समग्रस्यार्थं सम्यगुपपाद्य शिवशक्त्यात्मकविशिष्टब्रह्मोपासने मुक्तिरितिराद्धान्तितं क्रियासारे जिज्ञासुभिर्द्रष्टव्यम् । श्रीमदप्पय्यदीक्षितैः—

कर्तृत्वं तस्य धर्मं कलयति जगतां पंचके सृष्टिपूर्वं । धर्मः पुंरूपमाप्त्वा सकलजगदुपादानभावं बिभर्ति ॥ स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः। प्रोक्तौ धर्मप्रभेदावपि निगम-

विदां धर्मविद्ब्रह्मकोटी ॥ योऽसौ धर्मी स शम्भुः सः शिवइति परब्रह्मशब्देन प्रसिद्धो । याचोक्ता धर्मिणोऽस्या वियदादिनिमित्तहेतुर्या साम्विको सेति विद्धम् । यश्चोपादानभूतः पर इह पुरुषः सैव नारायणाख्या । इत्यानः श्रीकूर्मवाक्यैरथधर्मिनामिदं नाग्दस्याणि वाक्यैरिति ॥

शिवयोगविभागं अर्थाद्धर्मिणो धर्मेऽस्यत्व कूर्मविभागं शिवशक्त्योर्ब्रह्मकोटित्वं विष्णोः शक्तिशक्त्वं चोपपादितम् । अपिच श्रीकण्ठशिवाचार्यप्रभृतिभिर्ब्रह्ममीमांसाभाष्ये यत्र यत्र शिवाद्वैतं निरूपितं तत्र तत्र सर्वत्र विशिष्टाद्वैतमित्येव बोध्यम् ॥ कुतः आरम्भणाधिकरणे तावद्वयं न ब्रह्मप्रपंचयोरत्यन्तभेदवादिनो । घटपटयोरिव तदनन्यत्वपरश्रुतिविरोधात् । एवं न चात्यन्ताभेदवादिनो घटकपालयोरिव । नवाशुक्तिरजतयोरिवैकतरामिथ्यात्ववादिनः । तस्याः स्वाभाविकगुणभेदे परश्रुतिविरोधात् । एवं भेदाभेदवादिनोऽपि । विरोधेन वस्तुविरोधाच्च ॥ किन्तु शरीरशरीरिणोरिव गुणगुणिनोरिव विशिष्टाद्वैतवादिनः प्रकृतिप्रत्ययवत् । शक्तिःशिव

श्च मच्छब्दप्रकृतिप्रत्ययोदिनौ । अनयोः साम
स्येन स्थूलसूक्ष्मचिदचित्प्रपंचरूपशक्तिविशि
शिव एव कर्थेककारणरूपमतुपदविषयः
"एक एवरुद्रो नद्वितीयाय तस्थे" "एकमेवाद्वितीयं
ब्रह्म" इत्यादावेकवचनन्तु "यथाव्यक्त्या कृति जा
यस्तु पदार्थ" इति सूत्रे व्यक्त्याकृति जातीनां
प्रत्येकं गवादिपदशक्त्या किन्तु जात्याकृतिविशि
व्यक्तिरूपेणेति ज्ञापनार्थमेकवचनं । तथा शिवः
क्त्योः प्रत्येकं न शक्यता । किन्तु शक्तिविशिष्ट
वरूपेणेति ज्ञापनार्थमिति सर्वं समञ्जसम् । शक्ति
विशिष्टः शिव एवोपास्यः । शक्तिविशिष्टाद्वैतम
मेव सर्वोत्कृष्टम् । केचित्तु यथा बाला आकाशे न
मलिनताद्यध्यवस्यन्तितथा भ्रान्ताः पापादोषदूषि
बुध्या ब्रह्मादयः उपास्याः मोक्षदातार इति भ्रमान्नि
नेतु स्वयं संसारसागरनिमग्ना इत्युपपादितमेव॥
न्ननौकया नदींतितीर्षवइव कल्पयन्ति॥ इतिशिवम्

तिले तैलं दध्नि सर्पिः स्वर्णे कान्तिर्यथास्ति च
तथा शिवादभिन्ना सा तौ शिवौ च नमाम्यहम् ।

इति व्याकरणतीर्थादिपदवीक पं० श्रीसदाशिव शर्मणा
विरचितो वीरशैवेन्दुशेखरः समाप्तः ॥

श्रीरींमा महाराजाधिराजश्रीमहाराजभावसिंहदेवेन हिन्दीभाषया
दत्तदानशासनस्य संस्कृतभाषानुवादः ।

# श्रीविश्वेश्वर

नं० ४

## हस्ताक्षरम् ( सहि )

सिद्धिश्रीमहाराजाधिराज श्रीमहाराज भावसिंहदेवस्यादेशात् । श्रीगोस्वामि-मल्लिकार्जुन जंगमशिवयोगिनां धर्मार्थं पारीनामको ग्रामो दत्तः । सदासर्वदा-जन्मजन्मान्तरप्राप्तानां (जन्मान्तरीयानां) अस्मद्वंशीयानां एकेनाऽपि तद्ग्रामानिकटं न गन्तव्यम् । तत्र यदुत्पद्यते तत्सर्वं मल्लिकार्जुनसंप्रदायका एवानुभवन्तु । काशीवासार्थं श्रीप्रीत्यर्थं च दत्तः सः । चत्वारिंशदधिक सप्तदशशताब्दीय (१७४०) वैशाखशुक्लीय ( २ ) द्वितीयायां रविवासरे काश्यां लिखितं दानशासनं घुसुरकायस्थेन । स्वदत्तां परदत्तां वा यो हरेग्ग्रार्थवीमिमां । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ १ ॥ स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालनं । परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥ २ ॥

सिद्धिश्री श्रीमहाराजाधिराज श्रीमहाराज अवधसिंहदेवोऽहं पारीग्रामं ददौ जन्मजन्मान्तरेष्वनुभवार्थं श्रीमल्लिकार्जुनस्वामिनः श्रीकाशीविश्वनाथप्रीत्यर्थं च ॥

श्रीमद्राजाधिराजश्रीमैसूरमहाराजश्रीकृष्णभूपतिना कर्नाटकभाषया

दत्तदानस्य ताम्रपत्रस्य संस्कृतभाषानुवादः ।

नं० ५

श्रीमद्ब्रह्माण्डमण्डलविद्योतमानहृद्यानवद्यसमस्तवेदागमपुराणेतिहासप्रसिद्ध-भूकैलासवाराणसीपुटभेदनसध्यमहनीयहरिकेशनन्दनपरिष्कृतजंगमवाटिकामठा-धिष्ठितश्रीविश्वाराध्यपरंपरानुयातसिंहासनारूढपट्टाध्यक्षश्रीसिद्धलिंगमहास्वामिनां सन्निधानस्य—

स्वस्ति श्रीविजयाभ्युदयशालिवाहनशकाब्दसमयत्र्यधिक सप्तदशशत (१७६७) संख्यान्वित पराभवसंवत्सराषाढकृष्णपक्ष द्वितीयायां तिथौ भृगुवासरे श्रीमद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदांकितपतिलोकैक-वीरयदुकुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाळुवगण्ड-भेरुण्डधरणीवराहहनुमद्गरुडकण्ठीरवाद्यनेकबिरुदांकितमहीशूरपुरवराधीश श्रीकृ-ष्णराज ( वडियर ) भूपतिना लेखयित्वा प्रदत्तमिदं दानशासनं । ततः श्रीक्षे-त्रकाशीप्रविराजमानभवत्मठे प्रत्यहं द्वादश ( १२ ) माहेश्वराराधनं प्रचलत्वि-त्यनुज्ञां दत्वैतदाराधनस्य प्रतिमासं ( आंग्लेयरूप्यक ) पंचाशद्गणनानुसारेण प्रतिसंवत्सरं आंग्लेयरूप्यकाणिषट्शतानि (६००) श्रीकाशी क्षेत्रं प्रति हुण्डी द्वारेण प्रेष्यतं । एतच्छासनानुसारेण प्रतिदिनं माहेश्वराराधनोचितपाकसाहित्यं मृदादिक चनियमस्यतद्धर्ममाचन्द्रार्कं प्रचालयन्तः सन्तो भवन्तोऽस्माननुदिवस-माशीःप्रदानेन कृतार्थान् कुर्युरिति लिखितदानशासनमिदं । स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालनम् । परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥ ता. १०-७-१८४६

आस्थानोपकोशाध्यक्षः ( दुय्यगुरिकार ) सुब्बरायाभिधः ॥

श्रीमन्महाराजहस्ताक्षराणि—एतद्रीत्याऽनुशास्य षट्शत रूप्यकाण्य-स्मद्वर्धन्त्युत्सवदिने ( हुण्डीद्वारेण प्रेष्यते ) सहि—

**श्रीकृष्ण**

श्रीमेहर श्रीमन्महाराज श्रीरघुबीरसिंहदेवेन हिन्दीभाषया दत्तदानशा-

नं० ६ सनस्य संस्कृतभाषायामनुवादः ।

हस्ताक्षरम् ( सहि )

श्रीश्रीश्रीश्रीमद्ब्रह्माण्डमण्डलविद्योतमानहृद्यानवद्यसमस्तवेदागमपुराणेतिहास-प्रसिद्धभूकैलासवाराणसीपुटभेदनमध्यमहनीयहरिकेशनन्दनपरिष्कृतजंगमवाटिका महामठविश्वाराध्यसिंहासनाधिष्ठितश्रीसिद्धराजेश्वरस्वामिनां सान्निधौ ।

श्रीमहाराजाधिराज श्रीराजासाहेब श्रीराजबहादूरेतिबिरुदांकितरघुवीरसिंह-देवस्याऽदेशः । जंगमवाटिकामठस्य साधुजनभोजनार्थं स्वमेहरमण्डलस्थित-श्रीमत्प्रजाभिः प्रत्येकं पृथक् पृथक् प्रतिगृहं यद्धान्यमुत्पद्यते तास्मिन् ( किंचित् ) पंचाशदधिकैकोनविंशतिशततमीय विक्रमाब्दादारभ्य दातव्यम् । प्रतिसंवत्स-रान्ते नियमितस्थाने संगृहितव्यम् । मठात् साधुजना आगच्छेयुर्यदि संगृह्य दात-व्यम् ॥ द्विपंचाशदधिकैकोनविंशतिशत ( १९५२ ) संख्यान्वितात्वैशाख-शुक्लद्वितीयायां तिथौ सोमवासरे लिखितमिदं ।

